ORIENTAL RESEARCH INSTITUTE
SANSKRIT SERIES, No. 179

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# श्रीमद्ब्रह्मसूत्रभाष्यम्

टीकात्रयसमलङ्कृतम्
तृतीयं सम्पुटम्

SRĪ MADHVĀCĀRYA

# BRAHMASUTRA-BHĀSYA

WITH THREE GLOSSES

Vol. III

Critically Edited
BY
R. RAGHAVENDRA ACHARYA



ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

श्रीमज्जयतीर्थ-व्यासतीर्थ-श्रीराघवेन्द्रतीर्थानां

टीकाभिः समलङ्कृतम्

तृतीयः सम्पुटः

Oriental Research Institute Series No. — 179

# THE BRAHMASUTRA - BHASYA

OF

## SRĪ MADHVĀCĀRYA

WITH

GLOSSES OF

SRI JAYATIRTHA, SRI VYASATIRTHA &

SRI RAGHAVENDRATIRTHA

Vol. III

Oriental Research Institute Series—179

# THE BRAHMASŪTRABHĀSYA

OF

SRĪ MADHVĀCĀRYA

WITH

GLOSSES OF SRI JAYATIRTHA
SRI VYASATIRTHA & SRI RAGHAVENDRATIRTHA

Vol. III

*Critically Edited By*
R. RAGHAVENDRACHARYA



ORIENTAL RESEARCH INSTITUTE, MYSORE

प्राच्यविद्यासंशोधनालयग्रन्थमाला — १७९

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

श्रीमज्जयतीर्थ-श्रीव्यासतीर्थ-श्रीराघवेन्द्रतीर्थनां
टीकाभिः समलङ्कृतम्

तृतीयः सम्पुटः

संशोधकः
आर्. राघवेन्द्राचार्यः

# FOREWORD

I am glad to place in the hands of the learned public, this third volume of *Brahmasutrabhasya* of Sri Anandatirtha with three commentaries, even as the Institute is celebrating its centenary. The first edition of the volume was published in 1920 and it was long out of print. In response to the constant demand of scholars, reprinting of the *Bhasya* was taken up. The two earlier volumes were issued in 1984 and 1985 and third is now ready.

Dvaita is one of the schools of Vedanta Philosophy. The fundamental tenet of the school is that Brahman who is none other than Lord Visnu, jiva and the physical world are basically different entities and that the latter two depend entirely on the former. This theory was established by Anandatirtha also called Madhvacarya (1238—1317) who lived and taught in the coastal town, Udupi (Karnataka). He wrote a commentary on the Brahmasutra, to show that the basic text of Vedanta can also be interpreted from this angle. Anandatirtha's writings are by nature cryptic and terse. Hence it required explanation and elaboration. There came acarya Jayatirtha (1365—88) who did this stupendous task. In fact, he is hailed as Tikacarya. Jayatirtha's tika on Sutra-bhasya is Tattvaprakasika. Another acarya Vyasatirtha (1478–1539) who lived during the reign of

Krishnadevaraya of Vijayanagar, further expounded the crucial points of Tattvaprakasika in his Candrika. A later acarya Raghavendratirtha (1623–71) a well known scholar - saint of Mantralaya sought to clarify many difficult points of Candrika by writing Prakasa on it. These later acaryas also tried to answer the objections raised by the other vedantins in the meanwhile. All these commentary-super-super-commentary series, are included in these volumes. The volumes one and two contain adhikaranas 1 to 8, covering 1—22 sutras of the first pada of first adhyaya This third volume consists of the remaining adhikaranas of 1st pada and the whole of 2nd pada of 1st adhyaya. The earlier edition of these works was in 4 volumes taking the text to the end of 9th adhikaranas of 3rd pada of adhyaya 1. Soon after the fourth volume is reprinted, the work of editing of the remaining part will be taken up.

The edition was based on twelve manuscripts in all, four of Candrika and three of Prakasa were in the Institute collection. One of each of them were got from Nanjangud mutha as well as from editor's personal collections. One manuscript of Prakasa was from Mulabagilu mutha. All the manuscripts were written on paper in Devanagari characters.

The first edition was prepared by Vidwan R. Raghavendracharya who was the first Pandit of the Institute. The reprint was supervised by

Vidwan Anandatīrtha Nagasampige and Vidwan U. Radhakrishna M.A., M. Phil., Research Assistants in the Institute. They have done their best in seeing the work through the press.

It is with deep sense of gratitude that I place on record the support of the University for the activities of the Institute. Prof. M. Madaiah, Vice-Chancellor and Dr. Edward M. Gururaj, Registrar, have been very helpful. I hope the authorities of the University and the State as well as the Central Government recognise the academic efforts of the scholars working here and extend the needed financial assistance towards bringing out speedily new publications as well as reprints of the volumes gone out of print. Thanks to the past maestros of the Institute, the publications are sought after all the world over.

I am thankful to Sri D. Gururaj of Vivek Printers, Mysore, who has exerted himself in printing this volume.

Mysore
Dt. 21-3-1992

**R. S. Shivaganesha Murthy**
Director

# प्रथमावृत्तरेवतरणिका



अथास्य श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य तत्त्वप्रकाशिका-तात्पर्यचन्द्रिका-प्रकाशैस्साकं मुद्र्यमाणस्य तृतीयमिदं संपुटं प्रथमाध्याये प्रथमपादीयानां प्राणाधिकरणप्रभृतीनां चतुर्णामधिकरणानां, सप्ताधिकरण्यात्मकस्य समग्रस्य द्वितीयपादस्य च विवरणग्रन्थेन सुविहितशरीरं विराजतेतराम् . इतः प्राक्तनस्य द्वितीयसंपुटस्यावतरणिकायां आकाशाधिकरणान्ताया अष्टाधिकरण्याः प्रतिपाद्यविषयसंग्रहोऽकारि । अधुना तु संपुटे अस्मिन्नन्तर्भवतामेकादशानामधिकरणानां प्रतिपाद्यसंग्रहः क्रियते ।

परिच्छिन्नत्वेन सार्वत्रिकावकाशदानान्वयव्यतिरेकरहिते भूते आकाशशब्दप्रवृत्तिनिमित्तस्यावकाशदातृत्वस्यायोगेन, आवृत्तिमात्रविशिष्टाया एकस्या आकाशश्रुतेर्निरवकाशविष्णुलिङ्गैर्बाधार्हत्वेन, भूते मुख्यत्वबोधकमानाभावेन च पूर्वत्राकाशशब्दस्य भूतपरत्वासम्भवेऽपि, "भर्ता सन् भ्रियमाणः" इत्यनुवाके "तद्वै त्वं प्राणः" इत्यत्र प्राणशब्दस्य रूढ्या, जीवनान्वयव्यतिरेकवद्वायुवृत्तिशरीरकतया जीवनान्वयव्यतिरेकवत्त्वेन जीवनहेतुत्वरूपप्रवृत्तिनिमित्तयोगेन "मुखे मुख्यः प्रकीर्तितः इति मुख्यत्वबोधकप्रमाणसद्भावेन, अन्यत्रत्यमातरिश्व-प्राणादिबहुश्रुतीनां निरवकाशैरपि विष्णुलिङ्गैरबाध्यतया, वस्तुतोऽस्मिन्ननुवाके विष्णुलिङ्गानामभावेन, श्रीपतित्वस्य "अद्भ्यस्संभूतः" इत्यनुवाकान्तरस्थत्वेन श्रीशब्दस्य योगेन प्राणभार्यापरत्वसंभवेन च विष्णावसिद्ध्या प्राणे

संभवेन च मुख्यप्राणपरत्वावश्यम्भावात्, तत्रैव श्रुतमहाभोगशब्दोक्त-पूर्णानन्दत्वापरपर्यायमानन्दमयत्वं च तस्यैव न विष्णोरिति शङ्कायां, "प्राणस्य प्राणं" इत्यादौ प्रयोगेण "नामानि सर्वाणि" इत्यादिश्रुतिभिश्च विष्णौ प्राणशब्दस्य रूढेः, वायुवृत्तिगतजीवनान्वय-व्यतिरेकवत्त्वस्य वायुवृत्तिशरीरके मुख्यप्राण इव मुख्यप्राणशरीरके विष्णावपि संभवेन जीवनहेतुत्वस्य मुख्यप्राणगतस्यापि विष्ण्वधीनतया तदधीनत्वन्यायेन विष्णावेव मुख्यतया च योगस्य च सम्भवेन "योऽयं मध्यमः प्राणः" इति मुख्यप्राणस्य मध्यमप्राणत्वबोध-कवाक्यस्यैव विष्णोरुत्तमप्राणत्वबोधकतया प्राणशब्दस्य विष्णौ मुख्यत्वबोधकप्रमाणस्य च सत्त्वेन, प्राण-मातरिश्वादिश्रुतीनां वस्तुतो वैष्णवत्वेन प्राणश्रुतिबाहुल्याभावेन केवललोकप्रसिद्धेर्बाधसम्भवेन, श्रीपतित्वस्य भिन्नानुवाकस्थत्वेऽपि "ह्रीश्च ते" "तद्वै त्वं" इति वाक्ययोर्युष्मच्छब्दाभ्यामेकस्यैव वस्तुनो बोधस्य न्याय्यतया विष्णुलिङ्गत्वसम्भवेन, बहूनां श्रीलक्ष्म्यादिशब्दानां प्रमाणाद्यभावे लोकप्रसिद्ध्यतिक्रमस्यायुक्ततया योगेन प्राणभार्यापरत्वासम्भवेन अत्रैवानुवाके "तमेव मृत्युममृतं" इत्यादिना मृत्युत्वामृतत्वादिनिरवकाशविष्णु-लिङ्गानां श्रूयमाणतया च योगरूढिभ्यां प्राणशब्दस्य विष्णावेव मुख्यत्वादानन्दमयत्वं च तस्यैवेति सिद्धान्तयता प्राणाधिकरणेना-ध्यात्मिकाशेषनामसमन्वयः कृतः ॥ पूर्वत्र "तद्वै त्वं" इति वाक्यस्य वायुसूक्ताघटकतया तत्रत्यप्राणश्रुतिमात्रस्य निरवकाशविष्णु-लिङ्गैर्बाधसम्भवेऽपि, अग्निसूक्ते "वि मे कर्णा पतयो वि चक्षुर्वीदं ज्योतिः" इत्यत्रत्याया ज्योतिश्श्रुतेः सूक्तानुगृहीताया बाधायोगेन,

हृदयाहितत्वलिङ्गात्, "त्वमग्ने" इत्यग्निश्रुतिसन्निधानाच्च रूढ्या ज्योतिश्शब्दस्याग्निपरत्वमेव, 'इदमग्निसूक्तं न विष्णुसूक्तं' इति लोकप्रसिद्ध्या सूक्तस्य वैष्णवत्वायोगाच्च विष्णुपरत्वमिति हृदयाहितत्वेनोक्त आनन्दमयोऽपि न विष्णुरिति शङ्कायां, उदाहृतवाक्योक्तापरिच्छिन्नवैभवत्वरूपकर्णादिविदूरत्वलिङ्गस्य "परो मात्रया" इत्यादिश्रुत्या विष्ण्वेकनिष्ठतयाऽवगतस्यान्यत्र निरवकाशत्वात्, प्रकाशत्वरूपज्योतिःपदप्रवृत्तिनिमित्तस्यानन्याधीनत्वेन विष्णावेव मुख्यत्वात, तदेव ज्योतिषां ज्योतिः" इत्यादौ प्रयोगात्, "ज्योतिषैकेषां" इति वक्ष्यमाणन्यायेन ज्योतिः पदस्य वैष्णवत्वात्तद्धटितोक्तसूक्तस्य वैष्णवत्वाभावप्रसिद्धिरज्ञानमूलत्वेन ज्योतिश्श्रुतिसूक्तयोस्सावकाशयोर्निरवकाशविष्णुलिङ्गेन बाधात्, योगरूढिभ्यां ज्योतिःपदमुख्यवाच्यो विष्णुरेवेति स एवानन्दमय इति सिद्धान्तयता ज्योतिरधिकरणेन सूक्तगताशेषनामसमन्वयः कृतः ॥

पूर्वाधिकरणे ज्योतिश्श्रुतेरेकस्या निरवकाशलिङ्गेनान्यत्र प्रसिद्धिबाधेऽपि, छान्दोग्यतृतीयध्याये "गायत्री वा इदं सर्वं भूतं वाग्वै गायत्री" इत्यादिना श्रुतानामनेकासां गायत्रीवाक्पृथिव्यादिश्रुतीनामन्यत्रप्रसिद्धिबाधायोगात्, विष्णौ प्रसिद्धशब्दत्यागेनाप्रसिद्धगायत्रीशब्दप्रयोगे प्रयोजनाभावात्, उपदेशभेदाभावेनाग्निसूक्तस्थज्योतिषो विष्णुत्वसम्भवेऽपि इह 'दिवः' इति पञ्चम्युपदेशस्थज्योतिश्शब्दार्थस्य 'दिवि' इति सप्तम्युपदेशस्थगायत्रीशब्दार्थस्य चैकत्वानुपपत्तेः, वेदविशेषरूपगायत्र्या नित्यत्वेन तद्गतप्रवृत्तिनिमित्तस्येशाधीनत्वायोगेन तदधीनत्वन्यायानवतारात, प्राक्तनज्योतिर्निष्ठकर्णादिविदूरत्वविरुद्धदृष्टश्रुतत्वासम्भवेन अत्रत्यज्योतिषो विष्णुत्वानुपपत्त्या तदभिन्नगायत्र्या अपि विष्णुत्वायोगात्, रूढेरभावात्,

योगस्यामुख्यवृत्तित्वाच्च उक्तवाक्यस्थगायत्र्या विष्णुत्वं न सम्भवतीति रूढ्या छन्दोविशेषत्वमेवेति पूर्वपक्षे, "ज्यायांश्च पुरुषः" "यद्वैतद्ब्रह्म" "एतामेव ब्रह्मोपनिषदं" इति पूरुषब्रह्मादिश्रुतयः, "गायति त्रायति च" इत्युक्ताशेषवेदोच्चारणाख्यगानत्राणकर्तृत्वं, "पादोऽस्य सर्वा भूतानि" इत्युक्तभूतादिपादत्वं, "एतामेव नातिशीयन्ते" इत्युक्तसर्वोत्तमत्वं चेत्यादीनां श्रुतिलिङ्गानां बाहुल्येन बहुभिश्श्रुतिलिङ्गैर्बहूनामपि शब्दानां प्रसिद्धार्थत्याग-सम्भवात्, तत्तत्पदप्रवृत्तिनिमित्तगुणवत्तयोपासनार्थमप्रसिद्धपदप्रयोगोपपत्तेः, उपदेशभेदस्य चैकस्मिन्नेव त्रिसप्तलोकापेक्षयोपपन्नत्वात्, "स्वभावजीव-कर्माणि" इत्यादिश्रुत्या क्षेमायानादिनित्यस्यापीशाधीनतासम्भवेन छन्दोगत-प्रवृत्तिनिमित्तस्यापि विष्ण्वधीनत्वेन तदधीनत्वन्यायावतारसम्भवान्महायोगेन "सर्वच्छन्दोभिधो ह्येषः" इति पौराणिकरूढ्या च गायत्री विष्णुरेवेति प्राक्तनमग्रेतनं च ज्योतिस्स एवेति सिद्धान्तयता गायत्र्यधिकरणेन अधिवेद-गताशेषनामसमन्वयः सिद्धः ॥ अतीते नवमेऽधिकरणे प्राणशब्दस्य विष्णौ समन्वितत्वेऽपि चक्षुश्श्रोत्रादिभिस्सहपाठः "ता अहिंसन्त" इत्यादिनोक्तानि प्राणविवादो देहादुत्क्रमणप्रवेशने, ततो देहपातोत्थाने चेत्यादिमुख्यप्राण-लिङ्गानि तत्सहचरितप्राणश्रुतिश्चेति प्राणत्वसाधकैः "तं यच्छतं वर्षाणि" इति श्रुतशतायुष्ट्वं, तत्सङ्घटितपुरुषश्रुतिः "प्राणो वंशः" इति चक्षुरा-दीन् प्रति वंशत्वं चेति जीवत्वसाधकैः "इन्द्रो वै वृत्रं हत्वा" इत्यादिनोक्तानि वृत्रहननमहाव्रतयाजित्वादिलिङ्गानि "तमिन्द्र उवाच प्राणो वा अहमस्मि" इति इन्द्रप्रयुक्ताहंश्रुतिश्चेतीन्द्रत्वसाधकैश्च बहुभिः श्रुतिलिङ्गैः ऐतरेये "ता वा एताश्शीर्षञ्छ्रियश्श्रिताः चक्षुः श्रोत्रं मनो वाक्प्राणः" इत्यादिना श्रुतः प्राणो मुख्यप्राणजीवेन्द्रान्यतम इति पूर्वपक्षे,

" एतद्ध्येवैतत्सत्यं तं प्रपदाभ्यां प्रापद्यत, ब्रह्मेमं पुरुषं। अः इति ब्रह्म " इत्यादिश्रुतीनां, " तं देवाः प्राणयन्त । तं भूतिरिति देवा उपासां चक्रिरे, सर्वे वेदाः, प्राणो ह्येष य एव तपति, प्राणस्त्वं प्राणः सर्वाणि भूतानि आ पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानि " इत्यादिना श्रुतानां देवोपदेश्यत्व भूतित्वप्रकारकदेवोपासनाविषयत्व-सर्ववेदप्रतिपाद्यत्व-सूर्यमण्डलस्थत्व-सर्वान्तर्यामित्व-सर्वव्यापित्वलिङ्गानां च वचनान्तरबलेन विष्ण्वेकनिष्ठत्वेन बहुत्वेन च बलवत्त्वात्, पूर्वपक्षीयश्रुतिलिङ्गानां च तत्तदन्तर्यामिविषयत्वेन सावकाशत्वात् " उदासीनवदास्तां " इत्यस्य बाह्यरूपविषयत्वेनाविरोधात्, इन्द्रप्रयुक्ताहंशब्दस्य " अहं मनु " इत्यादौ वामदेवप्रयुक्ताहंशब्दवल्लक्षणया वा स्मार्तमुख्यवृत्त्या वाऽन्तर्यामिपरत्वात् प्राणो विष्णुरेवेति सिद्धान्तं कुर्वतापादान्तप्राणनयेन सलिङ्गनामसमन्वयः कृतः ॥

एवमनन्तवेदगतानां लोकतोऽन्यत्रप्रसिद्धानां अशेषनाम्नां तत्तद्वाक्यगतैरशेषैर्लिङ्गैर्विष्णौ समन्वये सिद्धे, तेषु विप्रतिपन्नानां लोकतोऽन्यत्रप्रसिद्धानां लिङ्गानां हरौ समन्वयो हेतुहेतुमद्भावसंगत्या द्वितीयपादे निरूप्यते । प्रागुक्तनामसमन्वयं प्रति लिङ्गसमन्वयस्य हेतुत्वं, तस्मिन् सत्येवास्योत्थानेन तत्कार्यत्वं चास्तीति संगतिसंभवः ॥

पूर्वपादान्त्यनयविचारितप्रकरणगते ब्रह्म ततमं" इत्यत्र श्रुतसर्वगतत्वान्तर्गतं ऐतरेये "चत्वारः पुरुषा इति बाध्वः" इति खण्डे "एतं ह्येव बह्वृचा महत्युक्थे" इत्यादिना "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्यन्तेन प्रतिपादितं सर्वप्राणिहृदयगुहास्थत्वरूपं सर्वभूतगतत्वं, प्रागसकृच्छ्रुतादित्यपदोक्तस्यैव 'एतं' इति परामर्शात्तस्य च " तस्यैतस्यासावादित्यो रसः " इति वाक्ये 'तस्यैतस्य' इति संवत्सरं

परामृश्य तदधिपतित्वरूपसंवत्सरसारत्वोक्त्या आदित्यपरत्वात्, "चित्रं देवानां" इति सौरमन्त्रोदाहरणात् 'आदित्ये एतं' इति क्षित्यादिष्विव विशिष्यानुक्तिलिङ्गाच्चादित्यस्यैव वा "चक्षुर्मयः श्रोत्रमयः" इत्यादिना वक्ष्यमाणचक्षुरादिसंबन्धरूपजीवलिङ्गात् "भूतेष्वेतं" इति भूतपदोपादानेन भूतादन्यत्राभावलाभेनाल्पौकस्त्वलिङ्गाच्च एतच्छब्दस्य तत्र तत्र वक्ष्यमाणपरामर्शित्वदर्शनात्सर्वजीवानामेव वा संभवति, न विष्णोः, उक्तश्रुतिलिङ्गानामसंभवाद्भूतगतत्वेन तद्गतसुखदुःखादिभोगापत्तेश्चेति पूर्वपक्षं प्रतिक्षिपता सूत्राष्टकात्मकेनाधिकरणेन, विष्णावेव प्रसिद्धब्रह्मशब्दात्, तस्य चात्र अमुख्यार्थव्यवच्छेदकैवकारसहितत्वेन मुख्यार्थग्राहकत्वात्, "स योऽतोऽश्रुतः" इत्याद्युत्तरवाक्यगतानां कार्त्स्न्येनाश्रुतत्वादिलिङ्गानामन्यत्रासंभवात्, "अहमात्मा" इति स्मृतिसमाख्यानात्, संवत्सरपदस्य विरिञ्चपरतया तदुत्तमत्वेन तत्सारत्वस्य, अन्तर्नयन्यायेनादित्यश्रुतेः, भूतपदस्योपासनार्थत्वेन व्योम्नीव सर्वगतत्वाविरोधिनोऽल्पौकस्त्वस्य च विष्णौ संभवेन सावकाशत्वात्, संभोगप्राप्तेस्सामर्थ्यवैशेष्येण परिहर्तुं शक्यत्वात्, 'भूतेषु' इत्यनेनैव वा आदित्यपदेन वा आदित्यस्थत्वस्याप्युक्तिसंभवात् चक्षुरादिस्वामित्वेन चक्षुर्मयत्वादेरुपपत्तेश्च कस्यापि बाधकस्याभावात्, अणोर्जीवस्यादित्यस्य वा सर्वगतत्वायोगेन परपक्षे बाधकसद्भावाच्च विष्णुरेव सर्वभूतगत इति सिद्धान्तयता भावलिङ्गसमन्वयः कृतः ॥

पूर्वाधिकरणे विषयवाक्यस्यादित्यश्रुतेरन्तर्नयसमन्वितसवितृश्रुतिपर्यायत्वाद्विष्णुपरत्वेऽपि, वाजसनेये तृतीयाध्याये "सर्वं वा अत्तीति तददितेरदितित्वं" इति वाक्यस्थाया अदितिश्रुतेः पूर्वसमन्वितशब्दपर्यायत्वाभावेन निरवकाशत्वात्, अत्तृत्वरूपलिङ्गस्यापि "अनश्नन्"

इति श्रुत्या अनत्तृतया प्रतिपन्ने विष्णावयोगाच्छ्रुतिलिङ्गयोर्द्वयोरपि निरवकाशत्वेन वा, श्रुतेरन्तर्नयन्यायेन सावकाशत्वेऽपि निरवकाशलिङ्गानुगृहीतत्वेन निरवकाशतया वा अत्तुर्विष्णुत्वं न संभवति, किं तु देवमातुरेवेति प्राप्ते, "सर्वं वा अत्ति" इत्युक्तसर्वसंहर्तृत्वरूपसर्वात्तृत्वस्य "यमप्येति भुवनं" इत्यादिभिर्विष्ण्वेकनिष्ठत्वात्तस्यैवादितिशब्दप्रवृत्तिनिमित्ततया अदितित्वलिङ्गस्यादितिश्रुतेश्च विष्णौ सावकाशत्वात्, नैवेह किंचनाग्र आसीत्, मृत्युनैवेदमावृतमासीत्" इति निरवकाशब्रह्मप्रकरणाच्च विष्णुरेवात्तेति सिद्धान्तयता अत्तृत्वाधिकरणेन क्रियालिङ्गं समन्वितम् ॥ पूर्वत्र प्रातिपदिकार्थस्य संहर्तृत्वस्य प्रत्ययार्थस्यैकत्वस्य चोपपत्त्या अत्तुर्ब्रह्मत्वेऽपि, "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ" इति काठकवाक्ये "ऋतं पिबन्तौ" इति प्रातिपदिकार्थकर्मफलभोक्तृत्वस्य प्रत्ययार्थद्वित्वस्य च कर्मबन्धविधुरे एकस्मिंश्च ब्रह्मण्ययोगेन ऋतपातृत्वलिङ्गं न विष्णोः, किं तु च्छत्रिन्यायेन जीवेश्वरयोरेवेति पूर्वपक्षे, तस्मिन्नेव वाक्ये "गुहां प्रविष्टौ" इत्युक्तस्य गुहाप्रविष्टत्वस्य "यो वेद निहितं गुहायां" इत्यादिभिर्विष्ण्वेकनिष्ठत्वात्, उत्तरवाक्ये परत्वविशेषणयुक्तब्रह्मशब्दात्, "एष सेतुः" इत्यादिश्रुत्यन्तरसिद्धाभयत्वसेतुत्वादिलिङ्गाच्च,

आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः ।

इत्यादिस्मृतिसिद्धरूपद्वयविवक्षया एकस्मिन्नपि द्वित्वस्योपपत्तेः, "अनश्नन्" इत्युक्तानशनस्य

शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।

इत्याद्यनुसारेण अशुभानशनरूपत्वसंभवाच्छुभकर्मफलभोक्तृत्वरूपमृतपातृत्वं विष्णोर्युज्यत एवेति समादधता गुहानयेन क्रियालिङ्गसमन्वयस्सिद्धः ॥ छान्दोग्ये चतुर्थाध्याये "य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इत्यत्र श्रुतोऽक्ष्यन्तस्स्थः, "य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि" इति गार्हपत्याख्याग्निना स्वात्मन आदित्यस्थत्वाभिधानात् "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इत्यादिश्रुत्या अक्ष्यादित्ययोरेकदैवत्यकत्वात् अग्नयस्समूदिरे" इत्यग्निश्रुतिबाहुल्याच्च, "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति तैत्तिरीयसमाख्यायाश्च "सोऽहमस्मि स एवाहमस्मि" इत्यभ्यासेन, अलौकिकविष्णुग्रहणे अपूर्वत्वमित्यस्य "अपहते पापकृत्यां, उपवयन्तं भुञ्जामः" इत्याद्यर्थवादेन बाधाच्च विष्णुः किंत्वग्निरेवेति पूर्वपक्षं प्रतिक्षिपता अन्तराधिकरणेन, मृतिभयवत्त्वेन प्रमितेऽग्नौ "एतदमृतमभयं" इत्युक्तामृतत्वाभयत्वयोर्विष्णवसाधारणयोर्ब्रह्मात्मशब्दयोश्चानवकाशत्वात्, "तद्यदस्मिन्" इत्यादिनोक्तात् अक्ष्णोरसङ्गत्वापादकत्वसंयद्वामत्वादिलिङ्गात्, "कं ब्रह्म खं ब्रह्म" इत्यादिब्रह्मप्रकरणात्, "स एनान् ब्रह्म गमयति" इत्युपसंहारे श्रुतैतद्विद्यानां ब्रह्मगत्याख्यलिङ्गश्रवणेन प्रकरणाविच्छेदात्, अग्निप्रयुक्ताहंशब्दस्य चान्तर्यामिपरत्वेनाभ्यासार्थवादयोरपि विष्णुनिष्ठत्वात्, अग्नेरपि जीवत्वेन प्रेरकजीवान्तरापेक्षायामनवस्थानाद्वस्तुतः प्रेरकत्वासंभवाच्च स्वतन्त्रो विष्णुरेवाक्षिस्थ इति सिद्धान्तकरणाद्रमणक्रियासहिताक्षिस्थितिरूपभावलिङ्गसमन्वयसिद्धिः ॥ वाजसनेये पञ्चमाध्याये "एष त आत्मान्तर्याम्यमृतः" इति श्रुतोऽन्तर्यामी, "यस्य पृथिवी शरीरं" इत्यादिना तत्रैव श्रुतस्य पृथिव्यादिशरीरकत्वस्य 'पूर्वपक्षस्य शरीरं' इत्यादौ शरीरशब्दस्य स्वरूपे प्रयोगात्पृथिव्याद्यात्म-

कतृत्वस्वरूपस्य "व्याप्तं कार्येषु कारणम्" इत्याद्यनुसारेण कारणस्य कार्यस्थतया "यः पृथिव्यां तिष्ठन्" इत्यादावुक्तपृथिव्यादिस्थत्वस्य च सर्वोपादाने प्रकृतौ कार्यकारणयोर्भेदाभेदाभ्युपगमेनोपपन्नत्वात्, कार्यस्य कारणाधीनत्वेन "यः पृथिवीमन्तरो यमयति" इत्यादेर्गौणत्वेनोपपत्तेः प्रकृतिरथवा पृथिव्याद्यभिमानिजीवा एव वा, तान् प्रति पृथिव्यादेः स्थूलशरीरत्वात्, न तु विष्णुरिति, अत्रामृतस्य प्रकृत्यादित्वे पूर्वाधिकरणविषयवाक्योक्तामृतत्वस्य न विष्णुत्वसाधकत्वमिति शङ्कां, "यं पृथिवी न वेद, यः पृथिवीमन्तरो यमयति" इत्यादिनोक्तस्य कार्त्स्न्येन पृथिव्यादिदेवाविदितत्वस्य, बाह्यापेक्षां विना रमणकर्तृत्वरूपान्तरत्वस्य च "न ते विष्णो, सर्वेषां भूतानामन्तरपुरुषः" इत्यादिश्रुतिभिर्विष्णवेकनिष्ठत्वात्, पृथिव्यादेर्जडत्वेऽप्रसक्तनिरासप्रसङ्गात् 'यं' इत्यस्य वैयर्थ्याच्च, शीर्यत इति योगेन वा ईशनियम्यत्वात्मकशरीरगुणयोगेन गौण्या वा पृथिव्यादौ ब्रह्मशरीरत्वसंभवेन "यः पृथिव्यां" इत्यादिनयस्य क्लेशमन्तरेणोपपन्नत्वात्, प्रकृतिजीवासाधारणत्रिगुणत्वसंसारित्वाद्यनुक्तेः, "आत्मनोऽन्तरः, विज्ञानादन्तरः" इति जीवाद्भिन्नत्वेनान्तर्यामिण उपदेशाच्च विष्णुरेवान्तर्यामीति सिद्धान्तकरणेन निराकुर्वता अन्तर्यामिनयेन अन्तर्यामित्वरूपक्रियाभावलिङ्गं समन्वितम् ॥ आथर्वणे "द्वे विद्ये वेदितव्ये" इत्युपक्रम्य "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यं" इत्यादिना श्रुतमहश्यत्वादिगुणकमक्षरं "यथा पृथिव्यां" इत्युपादानदृष्टान्तबलेन असति बाधकेऽन्तरङ्गत्यागायोगेन च 'अक्षरात्' इति श्रुतोपादानकारणत्वलिङ्गात् जडप्रकृतिरेवेति वा, "कूटस्थोऽक्षर उच्यते" इति स्मृतावक्षरपदस्य श्रीतत्त्वे प्रयोगादुपादानाभिमानित्वेनोपादानत्वस्यापि संभवाच्चित्प्रकृतिरेवेति वा

"स ब्रह्मविद्यां" इत्युपक्रमे ब्रह्मशब्दश्रवणाच्चतुर्मुख एवेति वा, "कर्तारमीशं" इत्युत्तरत्र ईशशब्दश्रवणाद्रुद्र एवेति वा, "अक्षरात्परतः परः" इत्युत्कर्षावधिभूतस्य विष्णोरुक्तनिकृष्टाक्षरत्वायोगेन, चित्प्रकृतिपक्षे 'अक्षरात् परतः' इति पञ्चम्योस्सामानाधिकरण्येन, पक्षान्तरेषु वैयधिकरण्येनोपपत्तेश्च पूर्वपक्षे प्राप्ते, "अथ परा यया स हरिर्वेदितव्यः" इत्यादिभिर्विष्ण्वेकधर्मत्वेनावगतपरविद्याविषयत्वरूपधर्मोक्तेः, "यदा पश्यः पश्यते रुक्मवर्णं" इति रूपोपन्यासात् तस्य च "विमिश्राणि व्यमिश्रयत्" इति मिश्ररूपत्वतयाऽवगतेषु विष्णोरितरेष्वसंभवात्, "अक्षरत्र यमीरितम्" इति स्मृत्या परावधित्वेनाक्षरस्यान्यतया निर्देशस्य विष्णुत्वाबाधकत्वात्, पृथिव्यादिदृष्टान्तस्य कारणत्वमात्रे संभवात्, ब्रह्मेशादिशब्दस्य विष्णावेव मुख्यत्वात्, जडपक्षे "यः सर्वज्ञः" इत्युक्तसार्वज्ञ्यादिविशेषणायोगात्, "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति "जुष्टं यदा पश्यत्यन्यमीशं" इति ब्रह्मरुद्रयोरक्षराद्भेदव्यपदेशाच्च अदृश्यत्वादिगुणकं परतः परत्वेन श्रुतमक्षरं विष्णुरेवेति सिद्धान्तयता अदृश्यत्वाधिकरणेनाप्यस्य-लिङ्गसमन्वयः कृतः ॥ छान्दोग्ये पञ्चमाध्याये "अभिविमानमात्मानं वैश्वानरमुपास्ते" इति, वाजसनेये सप्तमेऽध्याये अयमग्निर्वैश्वानरः" इति, "वैश्वानरमृत आजातमग्निं" इत्यृगादिषु च श्रुतो वैश्वानरः, अग्नावेव प्रसिद्धानां वैश्वानराग्न्यादिशब्दानां होमाधारत्व-गार्हपत्याद्यङ्गकत्व-पाचकत्वादिलिङ्गानां च श्रवणात्, तेषां च विष्णौ मुख्यत्वे लोकव्यवहार-विरोधात् सर्वेषां वैष्णवत्वापत्त्या 'इयमग्निविद्या' इयमन्यविद्या इत्यादि व्यवस्थानुपपत्तेश्च अग्निदेवता भूतं वा भवेत्, न विष्णुः, न च

विष्णुत्वसाधकश्रुति-लिङ्ग-समाख्या-प्रकरणानां बहुत्वान्निरवकाशत्वाच्चाग्नि-रेवेत्यनिर्णय इति युक्तम् उभयप्रापकाणां समबलत्वेनान्यतरानिर्णयेऽपि अत्रत्याभिविमानपदोक्तसर्वगतत्वविशिष्टस्य वैश्वानरस्याप्यनिर्णयेन प्राचीनं सर्वगतत्वेन अनमक्षरं विष्णुरेवेति सिद्धान्त्यभिमतनिर्णयायोगादिति पूर्वपक्षे, "आत्मानं" इति श्रुतादात्मशब्दात्, 'अभिविमानं" "इत्युक्तसर्वगत-त्वलिङ्गात्, "अहं वैश्वानरो भूत्वा" इति स्मृतिसमाख्यानात्, "को न आत्मा किं ब्रह्म" इति विचारपूर्वकमुपक्रम्यैतद्विद्याय अधीतत्वेन ब्रह्मप्रकरणात्, "शीर्ष्णो द्यौस्समवर्तत" इत्यादिना पुरुषसूक्तोक्तस्य द्युयादिजनकशीर्षाद्यवयवकस्यैव "मूर्धैव सुतेजाः" इत्यर्थतोऽत्रोक्तत्वेन पुरुषसूक्तसमाख्यानाच्च निरवकाशसाधकसद्भावात्, वैश्वानरादिशब्दानामग्न्यादिलिङ्गानां च तथोपासनार्थतया विष्णौ सावकाशत्वात्, विष्णौ मुख्यत्वेऽपि शब्दानामनन्यगतिकतया शब्दाधीनहानादिसिद्ध्यर्थमन्यत्र व्यवहाराविरोधात्, अग्न्यादि-विद्यादिभिर्ब्रह्मोपासनयाऽग्न्यादावेव विष्णोर्व्यक्तत्वानुस्मरणीयत्वप्राप्यत्व-निमित्तैर्विद्याद्विव्यवस्थोपपत्तेः कस्यापि बाधकस्याभावाद्विष्णुरेव वैश्वानर इति निर्णयं कुर्वता वैश्वानराधिकरणेन फलतः पाचकत्वाद्यनेक-लिङ्गसमन्वयस्सिद्ध इत्यलम् ॥

तदेवं स्वसिद्धान्तं निरूप्य, तद्विरोधेन परैस्तत्तदधिकरणतात्पर्य-विषयतया येऽर्था वर्णितास्तेषां परीक्षाऽपि तत्तत्स्थानेषु सम्यक्कृता स्वाभिमतार्थे सुदृढनिर्णयसमुत्पादनाय । यावदवश्यवक्तव्यं तावत्सर्वमपि सुनिरूपितम् ।

अस्य संपुटस्य मुद्रणात्प्राक् ग्रन्थसंशोधनं पूर्वसंपुटयोर्निर्दिष्टानां पुस्तकानां श्रीमत्सातारबाळाचार्यद्वारा खेटक्षेत्रनिवासिभिराद्यवंशीयाचार्यैः प्रहितस्य प्रकाशपुस्तकस्य, श्री-संजीवसुब्रह्मण्याचार्यसंबन्धिनश्चन्द्रिकापुस्तकस्य चाधिकस्य साहाय्येन निर्वर्तितमिति शम् ।

सुजनविधेयः,
रायपाळ्य राघवेन्द्राचार्यः



# विषयानुक्रमणिका

## द्वितीयपादे

### सर्वगतत्वाधिकरणे

विषयः पुटसङ्ख्या

—o—

श्रीः

# अथ टीका-चन्द्रिका-प्रकाशसमेते श्रीमद्ब्रह्मसूत्र-भाष्ये प्राणाधिकरणम्.



## ।। ओम् अत एव प्राणः ओम् ।।

"तद्वै त्वं प्राणो अभवः महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो नव" इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ।

---

तत्त्वप्रकाशिका.

अन्यत्राप्येवमिति ज्ञापनार्थमत्र सूत्रमादावेव पठति—अत एवेति । अत्र लोकतोऽन्यत्रप्रसिद्धप्राणनाम्नो विष्णौ समन्वयसमर्थनादस्ति शास्त्रादिसङ्गतिः । विषयवाक्योदाहरणपूर्वकं सङ्गतिं विषयसंशयौ च सूचयति—तदिति । यदुदितमानन्दमयत्वं विष्णोः, तत्कस्यचित्प्राणस्य "तद्वै त्वं" इति वाक्ये महाभोगशब्देन प्रतीयते । यस्माद्ब्रह्मणो भोगान् करिष्यमाणः कुर्वाणोऽकार्षीश्च, तस्मात्त्वं महाभोगोऽभवः, स्वस्य महाभोगाभावे परस्मै तद्दानानुपपत्तेः । यस्मात्पायुगुदैक्येन नवेन्द्रियाभिमानिनो देवानचेष्टयश्चेष्टयसि च, तस्मात्त्वं प्राणश्चाभव इति । तस्य च प्राणस्य विष्णोरन्यत्वेऽन्य-

स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम्, यतो विष्णुरेव प्राणः ।

तत्त्वप्रकाशिका

स्यैवानन्दमयत्वं स्यादित्ययं निर्णयो भवति । स प्राणोऽत्र विषयः । किं विष्णुरुत वायुरिति सन्देहः । महाभोगत्वं प्राणशब्दस्यान्यत्र प्रसिद्धिश्च सन्देहबीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षयति — स चेति । स प्राणो वायुर्भवेत्, प्राणशब्दस्य तस्मिन् प्रसिद्धेः । न च महाभोगत्वं श्रुतिबाधकं, श्रुतितो लिङ्गस्य दौर्बल्यात् । न च सावकाशत्वादिना बाध्यबाधकभावः, महाभोगवत्त्वस्यैव वायौ सावकाशत्वात् । प्राणश्रुतेर्विष्णावनवकाशात् । न हि तावत्प्राणपदस्य तत्र रूढिरस्ति । नाऽपि योगस्सम्भवति, प्राणशब्दप्रवृत्तिनिमित्त-जीवनकारणत्वस्यान्वयव्यतिरेकाभ्यां वायावेव दर्शनात्,

यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा ।

इत्यादेः । तथा च निरवकाशप्राणश्रुत्या महाभोगत्वलिङ्गस्य सावकाशस्य सुतरां बाधोपपत्तेर्वायुरेवायं प्राणः प्रागुक्तानन्दमयश्च, प्राणशब्दस्यान्यत्र प्रवृत्तावपि "मुखे मुख्यः प्रकीर्तितः" इति मुख्यवायावेव मुख्यत्वात्स एव प्राणो भवेदिति भावः । सिद्धान्तयति — न चेति । कुतो नैवमित्याशङ्कायां हेतुतया सूत्रं व्याचष्टे — यत इति । यतोऽयं प्राणो विष्णुरेवेति स एवान-न्दमयोऽतो वायुरयं प्राणः आनन्दमयश्चेत्येतन्न युक्तमित्यर्थः ।

'अत एव' "श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे", इत्यादितल्लिङ्गादेव ॥ ९ ॥

तत्त्वप्रकाशिका

कुतोऽयं प्राणो विष्णुरेवेत्यतः, सौत्रं हेतुमुपादाय व्याचष्टे—अत एवेति । श्रीलक्ष्मीपतित्वादिविष्णुलिङ्गात्प्राणो विष्णुरेवेत्यर्थः । वक्षःस्थलाश्रिता श्रीरिति सम्प्रदायविदः । कथं श्रुत्या पूर्वपक्षिते सति लिङ्गेन निर्णय इति चेत्, लिङ्गस्य निरवकाशत्वात्, प्राणश्रुतेर्विष्णावपि सावकाशत्वात्, निरवकाशेन सावकाशस्य बाधोपपत्तेः । रूढियोगयोरभावात् कथं विष्णौ प्राणश्रुतेरवकाश इति चेन्न, "ईशानः प्राणदः प्राणः" इत्यादिविद्वद्रूढेर्महायोगस्य च सत्त्वात् । न च जीवनस्य प्राणान्वयव्यतिरेकविरोधः, प्राणगतजीवनकारणत्वस्याऽपि भगवदधीनत्वात् । तथा च श्रुतिः—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेता उपाश्रितौ ॥

इति । तस्मादाध्यात्मिकाशेषशब्दोपलक्षकप्राणशब्दवाच्यो हरिरेवेति सिद्धम् ॥ ९ ॥

चन्द्रिका

## ॥ ओम् अत एव प्राणः ओम् ॥

अत्र आध्यात्मिकप्राणादिशब्दसमन्वय उच्यते । अत्रापि प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न तु विष्णुरित्याद्यधिकाशङ्कानिरासेन पूर्वन्याय एवातिदिश्यत इति भाति-

प्रकाशः

॥ ओम् अत एव प्राणः ओम् ॥ "आध्यात्मिकाशेषशब्दोपलक्षकप्राणशब्दवाच्यो हरिः" इति टीकां मनसि निधायाधिकरणोपाधिमाह—**अत्रेति** । प्राधान्यात्प्राणशब्दस्य सूत्रे मुखतः कीर्तनमिति भावः । अत्र भाष्यदिशाऽऽनन्दमयाधिकरणानन्तर्यप्रतीतेः "अतिदेशो हि तादृशः" इत्यनुभाष्यदिशान्तराधिकरणेन सङ्गतिमाह—**अत्रापीति** । न केवलं पूर्वत्रेत्यपेरर्थः । 'जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां वायोरेव' इत्यन्वयः । **इत्यादीति** । "प्रमाणाश्रिता तु" इत्यादिना वक्ष्यमाणदिशाऽऽदिशब्दः । तर्हि पूर्वानन्तर्ये को हेतुरित्यतः पूर्ववैषम्यमाह—**भूतेति** । न च भाष्यविरोध इति शङ्क्यं, तस्य, "तद्वै त्वं प्राणः" इति प्राणस्य विष्ण्वन्यत्वे महाभोगशब्दोक्तं पूर्णानन्दत्वमपि तस्यैवेत्यानन्दमयोऽप्यन्यस्स्यादिति पूर्वपक्षे तदाक्षेपेण सिद्धान्ते तत्समाधानेन प्रयोजनमात्रपरत्वोपपत्तेः । न च पूर्वं ब्रह्मशब्दादिना विष्णुनिष्ठतयाऽवधारितस्यानन्दमयत्वस्वरूपपूर्णानन्दत्वस्यात्र प्राणे श्रवणात् प्राणो विष्णुरेवेति वैपरीत्यस्यापि सम्भ-

चन्द्रिका

देशिकी अवान्तरसङ्गतिः । भूताकाशस्य त्ववकाशहेतुत्वेऽन्वयव्यतिरेकौ न स्तः, परिच्छिन्नस्य तस्याभावेऽपि क्वचिदवकाशदर्शनात् । यद्यप्यत्र "तद्वै त्वं प्राणः" इत्यत्र प्राणस्य विष्णोः अन्यत्वे "प्राणं देवाः" इत्यदावप्यन्यत्वं स्यात् इत्यपि

प्रकाशः

वाच्येदं प्रयोजनं युक्तमिति वाच्यं, टीकोक्तदिशा सावकाशेन लिङ्गमात्रेण निरवकाशप्राणश्रुतिबाधायोगात् । उक्तं च टीकायां—"न च महाभोगत्वं श्रुतिबाधकं, श्रुतितो लिङ्गस्य दौर्बल्यात्" इति । कथं तर्ह्यानन्दमये श्रुतस्य ब्रह्मशब्दादेर्बाध इति चेत्, अत्रत्यपूर्वपक्षन्यायेनान्यत्रप्रसिद्धनिरवकाशप्राणश्रुतिसाहचर्येणानन्दमयत्वस्यान्यत्रप्रसिद्धत्वापत्त्या तद्बलेन ब्रह्मशब्दादेर्मुख्यप्राण एव कथंचित्सावकाशत्वादिति भावः । भाष्योक्तं फलं प्रकारान्तरेणाक्षिप्य समाधत्ते — यद्यपीति । नन्वेवमयं प्राणोऽन्यश्चेत् "प्राणं देवा अनुप्राणन्ति" इत्युक्तोऽप्यन्यस्स्यादिति साक्षात्प्राणमयाक्षेपसमाधानेन साफल्यसम्भवे महाभोगत्वमुखेनाक्षेपस्तु वक्रो नाश्रयणीय इति शङ्कार्थः । न चात्र वक्ष्यमाणरीत्या प्राणश्रुतिबाहुल्यापादनसाहित्यादिरूपस्येव तत्र विशेषहेतोरभावान्न तदाक्षेप इति वाच्यं, एकत्र निर्णीतस्यैवार्थस्य बाधकाभावे सर्वत्र ग्राह्यत्वात् । न च तत्र विष्णुपरत्वं बाधकं, अव्याप्यसिद्धेः । न च तत्र मुक्तप्राप्यत्वादिब्रह्मलिङ्गमेव बाधकमिति

चन्द्रिका

प्रयोजनं वक्तुं शक्यम् । तथाऽपि सूत्रे कण्ठोक्तानन्दमयत्वाक्षेपो दर्शनीय इति भाष्यादौ तदुक्तिः । अत एव आनन्दमयोक्ताया: विष्णोः प्राणताया: इहाक्षेपान्न तेन गतार्थता, नापि प्राणशब्दस्योभयत्रप्रसिद्धता । अत्र प्राण: किं मुख्यवायुः उत

प्रकाशः

वाच्यं, अन्यत्र प्रसिद्ध्या ब्रह्मलिङ्गानामन्यथा नयनस्यात्रैव तत्रापि तुल्यत्वादिति उक्तत्वात् । **कण्ठोक्तेति** । उपलक्षणमेतत्, महाभोगत्वमुखेनानाक्षेपे विष्णुधर्मतया निर्णीतेन महाभोगत्वेन विष्णुरेव प्राण इति शङ्का स्यात् । सा मा भूत्, महाभोगत्वस्यापि वायुधर्मत्वादिति दर्शयितुमित्यपि ध्येयम् । एवं हि प्राणत्वस्यानाक्षेपे गतार्थतादिरित्यत आह—**अत एवेति** । 'प्राणतायाः' "को ह्येवान्यात्कः प्राण्यात्" इत्युक्तायाः अन्यथा तत्रैव विष्णोर्जीवनहेतुत्वरूपप्राणदत्वस्य सिद्धत्वादिह सिद्धान्ते तत्समर्थनं न स्यादिति भावः । **नापीति** । 'अत एव' इत्यनुवर्तते । प्राणपदप्रवृत्तिनिमित्तस्य विष्णावाक्षेपेण प्राणशब्दस्य भगवति वृत्तेरसम्मतेः । अन्यथा "आकाशोऽर्थान्तरत्वा" दित्यत्र पूर्वपक्षे "आकाश इति होवाच" इत्यत्र विष्णोराकाशताया: अनाक्षेपेणोभयत्रप्रसिद्धिवदुभयत्रप्रसिद्धता स्यादिति भावः । एवं संगतिमुक्त्वा भाष्योक्तप्रयोजनटीकां च समर्थ्य विषयसंशयटीकां व्यनक्ति—**अत्रेति** । "तद्वै त्वं प्राणो अभवः महान् भोगः

चन्द्रिका

ब्रह्म इति चिन्ता । तदर्थं किं प्राणश्रुतिप्रसिद्ध्यनुसारेण श्रीपतित्वादिलिङ्गं बाध्यं किं वा विपरीतमिति । तदर्थं प्रसिद्धिबाधे किं श्रुतेर्मुख्यत्वहानिरुत नेति । तदर्थं प्राणशब्दप्रवृत्तिनिमित्तं जीवनहेतुत्वं किं ब्रह्मणि नास्ति उतास्तीति । तदर्थं किं जीवनं मुख्यप्राणान्वयव्यतिरेकानुविधाय्युतेश्वरान्वयव्यतिरेकानुविधायीति । तथा "भर्ता सन् भ्रियमाणो बिभर्ति" इत्यनुवाकस्थेन "तद्वै त्वं

प्रकाशः

प्रजापतेः भुजः करिष्यमाणः यद्देवान् प्राणयो नव" इति तैत्तिरीये श्रुतः प्राणो विषय इति ध्येयम् । **मुख्येति** । प्राणशब्दस्य वायुवृत्त्यादिसाधारणत्वेऽपि तस्यात्रासम्भवप्रकारस्य वक्ष्यमाणत्वात् 'मुख्यवायुः' इत्युक्तम् । **विपरीतमिति** । लिङ्गानुसारेण श्रुतिर्बाध्येत्यर्थः । **जीवनेति** । "यद्देवान् प्राणयो नव" इति वाक्यशेषे तथोक्तेरिति भावः । **जीवनमिति** । 'जीवानां' इति शेषः । यदि जीवनं मुख्यान्वयव्यतिरेकानुविधायि, तदा प्राणशब्दप्रवृत्तिनिमित्तं ब्रह्मणि नेति मुख्यत्वहानेर्न श्रुतिबाधः कार्य इति वायुरेवेति पूर्वपक्षे फलम् । यदा तु विपरीतं तदा ब्रह्मेति सिद्धान्ते फलम् । इयं च चिन्तापरंपरा 'प्राणस्तथा' इति सौत्रप्रतिज्ञाशब्द्यावर्त्यप्रमेयाश्रिताभ्यधिकाशङ्कोपयुक्ता । एषा च शङ्काऽनुव्याख्याने कण्ठोक्तेति तदुपयुक्तचिन्तैव प्रथमं विशदीकृता । हेत्वंशव्यावर्त्यप्रमाणाश्रिताभ्यधिकाशङ्कोपयुक्तां चिन्तामाह—**तथेति** । तत्रैवं द्रष्टव्यं—प्राणो मुख्यवायुरुत ब्रह्मेति

चन्द्रिका

प्राणः " इति वाक्येनोक्तः प्राणः किं "अद्भ्यस्सम्भूतः" इत्यनुवाकस्थेन "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति वाक्येन उक्तादन्यः किं वा अनन्य इति । नन्वत्र प्राणो न तावत् जड-

प्रकाशः

चिन्ता । तदर्थं ब्रह्मत्वसाधकं लिङ्गादिकं नास्त्युनास्तीति । तदर्थं "भर्ता सन् भ्रियमाणः" इत्युक्तचिन्तेति । यदा त्वन्यस्तदा ब्रह्मलिङ्गमत्र नास्तीति साधकाभावाद्वायुरेवेति पूर्वपक्षे फलम् । यदा त्वनन्यस्तदा ब्रह्मलिङ्गसत्त्वाद्ब्रह्मेति सिद्धान्ते फलमिति ध्येयम् । अत्रैवं पूर्वपक्षक्रमः—प्राणशब्दस्य वायावेव प्रसिद्धेः वायुरेव प्राणो न विष्णुरिति । यद्यपि निरवकाशलिङ्गैर्लोकप्रसिद्धिबाध इह पूर्वत्र च अविशिष्टः, विषयवाक्यभेदेन च नाधिकरणभेदः । तथाऽपि

............अध्यात्ममन्वयव्यतिरेकतः ।

प्राणादिहेतुतादृष्टेरतिदेशो हि तादृशः ॥

इत्यनुव्याख्यनोक्तरीत्या " प्राणशब्दप्रवृत्तिनिमित्तजीवनकरणत्वस्यान्वयव्यतिरेकाभ्यां वायावेव दर्शनात् " इति टीकोक्ताभ्यधिकाशङ्कया पूर्वपक्षोत्थानसम्भवो वाच्यः । स चायुक्तः, प्राणो जडवायुरिति वा मुख्यवायुरेवेति वा पूर्वपक्षयितव्यत्वात् । तत्राद्यस्त्वयुक्तः, अन्त्ये हेतोरसिद्धिरिति भावेन " प्राणशब्दस्यान्यत्र वृत्तौ " इत्यादिटीकां विवृण्वन्नाक्षिपति—नन्विति ।

चन्द्रिका

रूपो वायुरिति पूर्वः पक्षः, जडं प्रति "त्वं प्राणो अभवः" इत्युक्त्ययोगात् । "ओषधे त्रायस्वैनम्" इत्यादेश्च स्वमतेऽभिमानिदेवतापरत्वात्, मीमांसकमते चान्यपरत्वेन अचेतनसम्बोधनपरत्वाभावात् । नापि मुख्यप्राण इति, जीवनस्य तदन्वयव्यतिरेकानुविधानादर्शनेन अधिकाशङ्काऽयोगात् । ननु आकाशाधिकरणपूर्वपक्षे जडस्याप्याकाशस्य आनन्दमयत्वादिकमिव, अत्रापि जडस्याप्यभिमानिद्वारा सम्बोधनादि युक्तम् । न च मुख्ये मुख्यत्वा-

प्रकाशः

**जडं प्रतीति** । चेतनं प्रतीव सम्बोधनादिरूपोक्त्ययोगादित्यर्थः । एतेन टीकायां मुख्यत्वोक्तिरुपलक्षणमिति सूचितम् । ननु "ओषधे त्रायस्व" इत्यादौ जडस्यापि सम्बोधनं दृश्यते इत्यत आह—**ओषध इति** । **अन्यपरत्वेनेति** । "अभिधानेऽर्थवादः" इति मन्त्राधिकरणगुणसूत्रे यत्राचेतना ओषधिग्रावादयस्त्राणश्रवणार्थमामन्त्र्यन्ते, किं पुनर्विद्वांसो ब्राह्मणा इति कर्मसमुत्साहार्थमित्युक्तेरुत्साहपरत्वेनेत्यर्थः । एतेन "न ह्यचेतनं प्रति त्वमेवमभव इति बुद्धिमतोच्यते" इति सुधावाक्यं विवृतम् । **तदन्वयेति** । वायुविकारान्वयव्यतिरेकानुविधायित्वस्यैव जीवनादेः प्रतीयमानत्वेन मुख्यान्वयव्यतिरेकानुविधानादर्शनादित्यर्थः । मन्दानां जडानां जडपरत्वेनापि पूर्वपक्षसम्भवभ्रममाशङ्क्य टीकादिविरोधेन निरस्यति—**नन्विति** । **आनन्दमयत्वादिकमिति** । पूर्वत्र स्पष्टमेतत् । 'अस्यापि' मुख्य-

चन्द्रिका

त्प्राणशब्दस्य कथं जडपरत्वेन पूर्वपक्ष इति युक्तम्, लोकप्रसिद्ध्या पूर्वपक्षयतो ब्रह्मणीव मुख्येऽपि मुख्यत्वज्ञानाभावादिति चेन्न, "मुख्यवायावेव मुख्यत्वात्" इत्यादिपूर्वपक्षटीकया "प्रेरकोऽस्यापि यद्धरिः" इत्याद्यनुव्याख्यानेन च विरोधात्। 'त्वमभवः, करिष्यमाणः, प्राणयः' इत्यादीनां बहूनाममुख्यार्थत्वापाताच्चेति चेत्, उच्यते–प्रत्यक्षेण जीवनस्य मुख्यप्राणान्वयव्यतिरेकानुविधानाज्ञानेऽपि "तत्प्राणे प्रपन्न उदतिष्ठत्" "तत्प्राण उत्क्रान्तेऽपद्यत" इत्यादिवाक्यात् तज्ज्ञानम्। न च "प्राणस्तथाऽनुगमात्" इति वक्ष्यमाण-

प्रकाशः

प्राणस्यापीत्यर्थः। टीकादेरपि किं मूलमित्यत आह—**त्वमभव इति**। यदुक्तं जडरूपो वायुरिति वा मुख्य इति वा पूर्वपक्ष इति, तत्र त्वदुक्तानुपपत्त्यैव जडायोगान्मुख्य एवेति ब्रूम इति भावेन तत्रोक्तं दोषं परिहर्तुमाह—**उच्यत इति**। "प्राणशब्दप्रवृत्तिनिमित्त" इत्यादिटीकां विवृण्वन् तत्र "यत्प्राप्तिः" इति स्मृत्युक्तिरूपलक्षणमिति भावेनाह—**तदिति**। ब्रह्मणश्शरीरमित्यर्थः। आदिपदेन

यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा।

इत्यादि, "अष्टश्च" इत्यत्र भाष्यस्थमत्र टीकोक्तं ग्राह्यम्। "तत्प्राणे" इति वाक्यं विष्णुपरं न वायुपरम्। अतोऽस्मादपि न जीवनहेतुत्वज्ञानं मुख्यस्येत्याक्षिपति— **न चेति**। **वक्ष्यमाणेति**।

चन्द्रिका

न्यायेन "तत्प्राणे" इत्यत्र प्राणो विष्णुरिति युक्तम्, अत्रत्यसिद्धान्तन्यायेन प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वं विष्णोरङ्गीकृत्य निरवकाशान्यलिङ्गेन तत्र पूर्वपक्षोदयेन तद्विचारस्यैतत्सिद्धान्तोत्तरभावितया एतत्पूर्वपक्षदशायां तत्रत्यसिद्धान्तासिद्धेः, यथा—"आकाशोऽर्थान्तर" इत्यस्य "आकाशस्तल्लिङ्गात्" इत्येतत्सिद्धान्तानन्तरभावितया "आकाशस्तल्लिङ्गात्" इत्येतत्पूर्वपक्षदशायां "आकाशोऽर्थान्तर" इत्येतत्सिद्धान्तासिद्धिः, तद्वत्। एतेन

प्रकाशः

तत्र हि "तावा एताः शीर्षञ्छ्रियः श्रिताः" इत्यारभ्य बहुषु स्थलेषु श्रूयमाणः प्राणो विष्णुरन्यो वेति विशये, प्राणसंवादादिलिङ्गात् मुख्यप्राणादिरन्य एवेति प्राप्ते, "तं देवाः प्राणयन्त" इत्यादिना देवोपदेश्यत्वादिविष्णुलिङ्गानामस्मिन्प्रकरणे अनुगमादनुवृत्तेरन्यप्रापकाणामन्तर्यामिणि सम्भवात्प्राणो विष्णुरिति वक्ष्यमाणन्यायेनेत्यर्थः। एतदुपजीवनेन तदधिकरणसिद्धान्तोत्थानादेतत्पूर्वपक्षदशायां तत्रत्यन्यायेनास्य वाक्यस्य न विष्णुपरत्वं शङ्काईमिति भावेन समाधत्ते—**अत्रत्येति**। **सिद्धान्तासिद्धेरिति**। अन्यथा स्वर्गकामाधिकरणसिद्धफलान्वयमुपेत्य किं भावार्थस्य फलकरणता किं वा नानार्थस्येति विचारात्मकभावार्थाधिकरणसिद्धान्तेन फलाभावरूपस्वर्गकामाधिकरणपूर्वपक्षानुदयः स्यादिति भावः। **यथाऽऽकाशोऽर्थान्तरेत्यादि**। प्रागेव विस्तृतमेतत्। **एतेनेति**।

चन्द्रिका

" प्राणस्तथा " इत्यनेन अस्य गतार्थत्वशङ्काऽपि निरस्ता । एत" दभावे ब्रह्मणो जीवनहेतुत्वाभावेन तत्र प्राणशब्दस्य मुख्यत्वा- सिद्धेः । अत एव टीकायां अन्वयव्यतिरेकयोः " यत्प्राप्तिर्य- त्परित्यागः " इति स्मृतिरुक्ता । यद्वा—कुलालशरीरस्य घटं प्रतीव मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनमात्रेण तस्य तत्र हेतुत्वम् । अत एवोक्तं सुधायाम्—"वायुविकारशरीरत्वा-

प्रकाशः

एतत्पूर्वपक्षदशायां तत्रत्यस्य प्राणस्य वायुपरत्वकथनेनेत्यर्थः । अन्यथा " तत्प्राणे " इति श्रुतेः तत्रैव विष्णुपरत्वसिद्धौ विष्णोरेव श्रौता- न्वयव्यतिरेकाभ्यां जीवनहेतुत्वसिद्ध्या प्राणपदमुख्यार्थत्वसिद्धेरेतदना- रम्भ एव स्यादिति भावः । तदेव व्यनक्ति — **एतदिति** । वा क्याच्चज्ज्ञानमित्युक्तपरिहारं टीकारूढं करोति — **अत एवेति** । प्रत्यक्षेण जीवनहेतुत्वस्य ज्ञानायोगादेवेति वा, वचनगम्यत्वादेवेति वाऽर्थः । टीकायां स्मृत्युदाहरणेऽपि वक्ष्यमाणप्राणनयेनागतार्थ- त्वादि द्योतयितुमस्माभिः श्रुतिरुदाहृतेति हृदयम् । एवं टीकानुरो- धेन जीवनहेतुत्वादेर्मुख्याधीनत्वं वाक्यसिद्धमित्युक्त्वेदानीं सुधानुसा- रेण प्रत्यक्षेणैव सिद्धमित्याह—**यद्वेति** । यथा घटं प्रति कुला- लशरीरस्य अन्वयव्यतिरेकदर्शनमात्रेण कुलालात्मनो हेतुत्वं गम्यते , तथेत्यर्थः । **वायोरिति** । जडभूतस्येत्यर्थः । ' तस्य ' मुख्यप्रा- णस्य । ' तत्र ' **जीवने** । **अत एवेति** । शरीरान्वयव्य-

चन्द्रिका

न्मुख्यस्य " इति । ब्रह्मणस्तु सर्वगत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वा नास्मदादिशरीरे अभाव इति, न तद्व्यतिरेकाज्जीवनव्यतिरेकः । यद्यपि " अन्तर्यामी " इत्यत्रेशस्य गौणं यौगिकं वा शरीरमस्तीति वक्ष्यते, तथाऽपि न जीवनव्यतिरेकस्य गौणा-

प्रकाशः

तिरेकदर्शनमात्रेण तच्छरीरिणो देहित्वावगमादेवेत्यर्थः । एतेन टीकायामपि 'दर्शनात्' इत्यस्य प्रत्यक्षेण दर्शनादित्यर्थः । स्मृत्युक्तिश्चाभ्युच्चयत्वेनेत्यपि सूचितम् । ननु ब्रह्मणोऽप्येवं किं न स्यादित्यतः " वायावेव दर्शनात् " इति टीकास्थावधारणव्यावर्त्यं विवृण्वंस्तर्त्कि प्रत्यक्षादिसिद्धाभ्यामन्वयव्यतिरेकाभ्यां जीवनहेतुत्वं विष्णोरुच्यते अथ श्रुत्येति विकल्पौ हृदि निधायाद्य आह—**ब्रह्मणस्त्विति** । **सर्वगतत्वादिति** । " स एवाधस्तात्स उपरिष्टात् " " सर्वगतं सुसूक्ष्मं " " अशरीरः प्रज्ञात्मा " इत्यादेरिति भावः । **अभाव इति** । नन्वक्षराधिकरणे अणुत्वस्यापि वक्ष्यमाणत्वात्तद्व्यतिरेकोऽपि सम्भवतीति चेन्न, सर्वगतत्वासमानाधिकरणाणुत्वस्यैव व्यतिरेकप्रयोजकत्वादित्याशयात् । नन्वन्तर्याम्यधिकरणे " यस्य पृथवी शरीरं " इत्यादिना सशरीरत्वं वक्ष्यते । तत्कथमशरीरत्वमित्याशङ्क्य निरस्यति—**यद्यपीति** । नन्वथाऽपि " भूमा सम्प्रसादात् " इत्यत्र 'उत्क्रान्तप्राणान् शूलेन समासं व्यतिषं वहेत् " इत्युत्क्रमणलिङ्गात्प्राणो वायुरिति प्राप्ते, पूर्ण-

चन्द्रिका

दिशरीरव्यतिरेकानुविधानेन तत्कार्यत्वमतिप्रसङ्गात् । भूमाधिकरणे तु सर्वगतस्यापि ईशस्य अस्मदादिशरीरादुत्क्रमणमस्तीति वक्ष्यते, न तु तत्राभावः । तस्मान्न विष्णोर्जीवनादिहेतुत्वं अन्वयव्यतिरेक-

प्रकाशः

सुखत्वलिङ्गात् उत्क्रमणस्य च रूपविशेषेण विष्णावपि सम्भवाद्विष्णुरेव प्राण इत्युक्तन्यायेन विष्णोरप्यभावो युक्त इत्यत आह—**भूमेति** । यथा शरीरस्थस्यैव चक्षुषो भ्रुवादिमण्डलपर्यन्तं निर्गमनं, तथा विष्णोरपि विचित्रशक्तिवशात्पद्विशेषादिना देहे सत एव महत्त्वस्य शक्त्याऽणुत्वस्य व्यक्त्या उत्क्रमणोपपत्तेरिति भावः । **अन्वयेति** । प्रत्यक्षेण वा आगमेन वा सिद्धाभ्यामन्वयव्यतिरेकाभ्यां कल्प्यं न भवतीत्यर्थः । यद्यप्यत्र विष्णोर्व्यतिरेकमुपेत्यापि किमन्वयव्यतिरेकौ प्रत्यक्षगम्यौ उतागमगम्यौ । आद्येऽपि किं साक्षादुत शरीरद्वारा । नाद्यः, अयोग्यत्वात् । न द्वितीयः, अशरीरत्वात् । नान्त्यः, "तत्प्राणे प्रपन्ने" इत्यादेरिव तद्बोधकागमस्याभावात् । भावे वा तस्य वायुपरत्वादित्यपि वक्तुं शक्यं भवति । तथाऽप्यस्य स्पष्टत्वादन्वयव्यतिरेकासिद्धत्वेऽपि श्रुत्या जीवनहेतुत्वं सिध्यतीत्यस्यावश्यापाकर्तव्यत्वाद्रास्तवाभिप्रायेण व्यतिरेकाभावेनैवान्वयव्यतिरेकाकल्प्यत्वमुक्तम् । एतेन "प्राणादिहेतुताद्दष्टेः" इत्यत्र प्राणादिहेतुतायाः परमात्मन्यन्वयव्यतिरेकतोऽदृष्टेरदर्शनादित्यप्यनुव्याख्यायोजना, सुधोक्ता व्य-

चन्द्रिका

कल्प्यम् । नापि श्रुतिसिद्धम्, अन्वयव्यतिरेकानुसारेण "येन जातानि जीवन्ति" इत्यादेर्मुख्यप्राणविषयत्वात् । "इतरेण तु जीवन्ति" इत्यादावितरशब्दस्तु वायुवृत्तिरूपप्रसिद्धप्राणेतरत्वविवक्षया मुख्यप्राणेऽपि युक्तः । केचित्तु—"अन्वयव्यतिरेकाभ्यां हि हेतुता कल्प्या" इति सुधायाः प्रातीतिकार्थं

प्रकाशः

तिरेकायोगेनोपपादनीयेति स्पष्टीकृता । एवं—अदृष्टेरागमेनाप्यदर्शनादित्यर्थान्तरमप्यभिप्रेत्य द्वितीयपक्षमपि निषेधति—**नापीति** । **मुख्यप्राणेति** । अन्यथा श्रुत्या प्रत्यक्षेण चोक्तान्वयव्यतिरेकानुपपत्तेरिति भावः । ननु च

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥

इत्यत्र प्राणस्य जीवनहेतुत्वनिरासपूर्वं विष्णोरेव तदुक्तेस्तद्विरोध इत्यतः, प्राणापानशब्दयोः जडवायुपरत्वेनेतरशब्देन तद्भिन्नचेतनस्य वायोरेव ग्रहणादित्याह—**इतरेण त्विति** । ननु 'नापि श्रुतिसिद्धं' इत्याशङ्कानिरासावयुक्तौ, "अन्वयव्यतिरेकाभ्यां हि हेतुता कल्प्या । न च परमात्मनः प्राणशब्दप्रवृत्तिनिमित्तजीवनादिहेतुतावगमकान्वयतिरेकौ पश्यामः" इति सुधाविरोधात् । तत्रान्वयव्यतिरेककल्प्यताया एव हेतुत्वस्य प्रतीतेरित्युत्तानदृशां भ्रममनूद्य निरस्यति—**केचित्त्विति** ।

चन्द्रिका

गृहीत्वा हेतुताया अन्वयव्यतिरेकमात्रगम्यत्वान्न श्रुतिस्तत्र प्रमाणमिति पूर्वपक्ष्यभिप्राय इत्याहुः । तन्न, यागादेः स्वर्गादौ अहेतुत्वापातात् । अन्ये तु व्यतिरेकगर्भिताया हेतुतायास्तद्रहिते परमात्मनि अयोगान्न तस्य जीवनहेतुता श्रुत्याऽपि बोधयितुं शक्येति तदभिप्राय इत्याहुः । तदपि न, नित्यविभूनामहेतुत्वापत्तेः । तस्माज्जीवनादिहेतुत्वं न ब्रह्मगतम् । नाप्यन्यगतं तदधीनम्,

प्रकाशः

**अन्वयव्यतिरेकमात्रेति** । प्रत्यक्षादिसिद्धान्वयव्यतिरेकेत्यर्थः । **तत्रेति** । अन्वयव्यतिरेकद्वारकहेतुतायाम् । **यागादेरिति** । तत्र प्रत्यक्षादिसिद्धान्वयव्यतिरेकयोरप्रसरादिति भावः । एतेन 'न च पश्यामः' इति सुधागतस्यागमेन न पश्यामः, "येन जीवन्ति" इत्यादेरपि मुख्यविषयत्वादित्यपि तात्पर्यमुक्तं भवति । एतेन "अन्वयव्यतिरेकप्रमाणत्वाद्धेतुहेतुमद्भावस्य" इति न्यायविवरणटीकाऽपि काचित्कत्वाशयेति दर्शितम् । नन्वीश्वरहेतुत्वे श्रुतिप्रमाणशङ्का, तन्निरासस्तु न मुख्यप्राणविषयत्वमुपेत्य, किं त्वन्यथैवेति भ्रममनूद्य तन्निरस्यति— **अन्ये त्विति** । **तद्रहित इति** । नित्यविभुत्वाद्देशतः कालतो वा स नास्तीति भावः । 'नित्यविभूनां' प्रकृत्यादीनाम् । "प्राणशब्दप्रवृत्तिनिमित्तस्य वायावेव" इति टीकास्थावधारणस्य स्वातन्त्र्यरूपस्यापि न विष्णावित्यर्थान्तरमभ्युपेत्याह— **नापीति** । स्वातन्त्र्यस्यापि शब्दप्रवृत्तिहेतुत्वेन प्राणो विष्णुस्स्यात्

चन्द्रिका

जन्मादिसूत्रोक्तस्थितिहेतुताया असम्भवादिप्रसङ्गात् । तस्मान्मुख्यवायुरेव प्राण इति स एवानन्दमयः, तस्यान्तरधिकरणे पूर्वपक्षितेन्द्रादिवदानन्दवल्ल्यामानन्दमयाद्भेदव्यपदेशाभावेन, आकाशाधिकरणे पूर्वपक्षिताकाशवच्च जडत्वाभावेन स्वत एवानन्दमयत्वसम्भवात् । तस्मात् "अन्वयव्यतिरेकतः" इत्यनुव्याख्यानोक्ताऽधिकाशङ्का युक्ता । इयञ्च प्रमेयाश्रिता । प्रमाणाश्रिता तु— पूर्वत्राकाशश्रुतेरिव इह न श्रुतेरावृत्तिमात्रम्, किन्तु "त्वं प्राणः"

प्रकाशः

दिति शङ्काभिप्रायः । **असम्भवादीति** । भगवति जीवनरूपस्थितिहेतुत्वस्याभावेनान्यत्र भावेन चासम्भवातिव्याप्ती स्यातामिति भावः । टीकोक्तमानन्दमयाक्षेपमनूद्य समर्थयते — **स एवेति** । 'महाभोगः' इत्यानन्दमयत्वेनोक्तस्य प्राणस्य मुख्यत्वात् प्रागुक्तानन्दमयोऽपि स एव स्यादित्यर्थः । 'इन्द्रादिवत्' इन्द्रादेरिव । **भेदव्यपदेशेति** । "भेदव्यपदेशाच्च" इति सूत्रभाष्योक्तदिशेति भावः । "प्राणशब्दप्रवृत्ति" इत्यादिटीकाया मूलं दर्शयन्नुपसंहरति—**तस्मादिति** । **इयं चेति** । अनुव्याख्यानोक्ता प्राणपदप्रवृत्तिनिमित्ताश्रितेत्यर्थः । "प्राणशब्दस्य तस्मिन् प्रसिद्धेः" इत्यादिटीकायां श्रुतित्वनिरवकाशत्वाभ्यां लिङ्गाच्छ्रुतेः प्राबल्येन पूर्वपक्षोक्तिरुपलक्षणमिति मत्वाऽऽह — **आवृत्तीति** । "प्राणः, प्राणयः" इत्यावृत्तिमात्रं नेत्यर्थः । "त्वं भर्ता मातरिश्वा प्रजानां" इति मातरिश्वश्रुतिर्ध्येया ।

चन्द्रिका

"देवान् प्राणयः" 'मातरिश्वा' इति श्रुतिबहुत्वमस्तीति निरवकाशेनापि न बाध इत्येका । इयं च भाष्ये बहुश्रुतियुक्तविषयवाक्योदाहरणात् सूचिता । अन्या तु—यदि प्राणशब्दस्य योगेन विष्णुपरता, तर्हि लक्ष्म्यादिशब्दानामपि योगेन प्राणभार्यापरत्वसम्भवात् लक्ष्मीपतित्वादिलिङ्गस्यैवासिद्धिः । अथ लक्ष्म्यादिशब्देषु न प्रसिद्धार्थत्यागः, तर्हि प्राणशब्देऽपि तथा । इयं च "प्रसिद्धेर्वायुः" इति भाष्ये सूचिता । इयं यद्यपि आ-

प्रकाशः

'निरवकाशेनापि' श्रीपतित्वादिलिङ्गेनेत्यर्थः । 'अपि' इत्यभ्युपगमः, तदभावस्याग्रे स्पष्टत्वात् । नन्वियं शङ्का गायत्र्यधिकरणे क्रियते । यदाहुः—

कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ।

इतीति चेन्न, अनेकश्रुतिप्रसिद्ध्युपजीवनेन तत्र प्रवृत्तत्वात्, इह बहुत्वमात्रस्योपजीवनात् । यद्वा — गायत्रीवाक्यबिल्व्यादिश्रुतीनां भिन्नविषयत्वादिहैकविषयतद्बाहुल्यस्याभिप्रेतत्वात् । नन्वथापि पादान्त्यप्राणाधिकरणे तादृक्श्रुतिबाहुल्यशङ्काऽपाक्रियते । तदुक्तं "बाहुल्याच्छ्रुतिलिङ्गयोः" इति सत्यं, तत्र बहुश्रुतिगतनिरवकाशत्वोपजीवनेन पूर्वपक्षप्रवृत्तिरिह तु बहुत्वमात्रोपजीवनेन प्रवृत्तिरिति ध्येयम् । वक्ष्यते चैतत्तत्रैव । योगेनेति । "लक्ष दर्शने" इति धातोः लक्षयति सर्वमित्यादियोगेनेत्यर्थः । भाष्ये सूचितेति । 'भाष्येऽ-

चन्द्रिका

काशादिशब्दसाधारणी, आकाशश्रुतेः प्रसिद्धार्थहानौ अनन्तत्वादिलिङ्गानामपि तद्धानिस्स्यात् इति शङ्कोदयात् । तथाऽपि पूर्वाधिकरणे अनुदूधृतेत्यधिकाशङ्का । अपरा तु—मुख्यवायौ मुख्यप्राणत्वप्रसिद्धेः "मुखे मुख्यः प्रकीर्तितः" इति वचनाच्च प्राणशब्दस्य परमात्मनि मुख्यत्वायोगात् मुख्यसम्भवे चामुख्यग्रहणायोगात् नात्र प्राणशब्दः परमात्मपरः । आकाशशब्दस्य तु भूते मुख्यत्वे न प्रमाणमस्तीति । इयं च टीकायां मुख्यपदप्रयोगादिना सूचिता ।

प्रकाशः

प्यस्य सर्वस्यापि स्वीकारार्थं प्रसिद्धिरित्याह' इति सुधायां दिक्प्रदर्शनस्य कृतत्वादिति भावः । अनुदूधृतेति । इहैव सौत्रैवकारेण लिङ्गनिरवकाशत्ववाचिनोद्ध्रियते । तथा चानेन रूपेण तदप्यत्रोदाहरणमित्युक्तं भवति । वचनाच्चेति ।

चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते ।
प्राणशब्दस्त्रिषु ह्येषु मुखे मुख्यः प्रकीर्तितः ॥

इति वचनाच्चेत्यर्थः । मुख्यत्वायोगादिति । प्रसिद्धिवचनयोरभावादिति भावः । नन्वाकाशशब्दस्य भूते मुख्यस्यापि बाधः कथमित्यत आह—आकाशेति । उपलक्षणमेतदिन्द्रादिशब्दस्य । तत्र "मुखे मुख्यः" इतिवदिन्द्राकाशादौ मुख्य इति वचनाभावात् । अत एव 'वचनाच्च' इत्युक्तम् । 'आदिना' इत्यादिपदेन प्रमा-

चन्द्रिका

इतरा तु—पूर्ववन्निरवकाशब्रह्मलिङ्गाभावान्न ब्रह्मपरतेति । न च श्रीपतित्वादिकं लिङ्गं निरवकाशमिति वाच्यम् ; "अद्भ्यस्सम्भूतः" इत्यनुवाके "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति उक्तस्य विष्णुत्वेऽपि "भर्ता सन् भ्रियमाणः" इत्यनुवाके "तद्वै त्वं प्राणः" इत्युक्तस्य "त्वं भर्ता मातरिश्वा प्रजानां" इति मातरिश्वश्रुत्या "प्राणापानावजिरं संचरन्तौ" इत्यपानसाहित्यलिङ्गेन चाविष्णुत्वात् । इयमपि शङ्का "न चात्र वाक्ये पूर्ववदनन्यथासिद्धं लिङ्गमस्ति" इति सुधाग्रन्थेऽत्रपदेन सूचिता । तस्मादुक्ता अधिकाशङ्का ।

प्रकाशः

णकथनादिर्भावः । 'पूर्ववत्' आकाशाधिकरण इवेत्यर्थः । तत्र निरवकाशलिङ्गमाशङ्क्य तस्य भिन्नप्रकरणगतत्वेन परिहारमाह—न चेति । अत्रपदेनेति । तदनेन "न चात्र वाक्ये पूर्ववदनन्यथासिद्धं किमपीश्वरलिङ्गमस्ति, येन श्रुतिबाधं प्रत्येष्यामः" इति वाक्यं, श्रीपतित्वादिलिङ्गं भिन्नप्रकरणगतं, महाभोगत्वादिकं त्वन्यथासिद्धमित्याशयतया योज्यमित्युक्तं भवति ।

नन्वेतच्छङ्कानिरासकन्यायं सूत्रे नोपलभामह इत्याशङ्क्य, 'प्राणस्तथा' इति प्रतिज्ञांशतात्पर्यं व्यञ्जयन् आदावनुव्याख्यानोक्तप्रमेयाश्रिताभ्यधिकाशङ्कयोर्मध्ये, न विष्णोर्जीवनादिहेतुत्वमन्वयव्य-

चन्द्रिका

तत्परिहारेण सिद्धान्तस्तु—

वायुवृत्तिर्यथा मुख्यप्राणदेहस्तथैव सः ।
विष्णोर्देहस्ततस्तस्यैवान्वयव्यतिरेकिता ॥

वायुवृत्तिर्मुख्यप्राणस्येव सोऽपि ब्रह्मणो देहस्थानीयः । युक्तश्च भूमाधिकरणे ईश्वरस्यास्मदादिशरीरादुत्क्रमणस्य वक्ष्यमाणत्वादजीवनदशायां रूपविशेषस्य व्यक्त्यात्मना तत्संयोगाभावात् व्यति-

प्रकाशः

तिरेकलभ्यमिति यदुक्तं, तच्छङ्कानिवर्तनप्रकारं संगृह्णाति—तत्परिहारेणेति । "प्राणगतजीवनादिकारणत्वस्यापि भगवदधीनत्वात्" इति टीका उपलक्षणम् । अत एव "प्रेरकोऽस्यापि" इत्यनुव्याख्यानं 'अस्यापि' जीवनादेरपि इत्यपि सुधायां व्याख्यातमिति भावः । 'देहः' इत्युक्त्या मुख्यदेहभ्रमं वारयन्व्याचष्टे—वायुवृत्तिरिति । 'सोऽपि' मुख्योऽपि । तथा च यथा प्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयादिदर्शनमात्रेण मुख्यस्य तत्र हेतुत्वं, तथा मुख्यस्यापि साक्षात्प्रयत्नाधिष्ठेयत्वेन विष्णुदेहत्वात्तदन्वयादिदर्शनमात्रेण तस्य तत्र हेतुत्वं भविष्यतीत्यर्थः । एतेनाशरीरत्वाच्च तच्छरीरस्यास्मदादिशरीरे व्यतिरेक इति निरस्तम् । प्राणस्य तच्छरीरत्वेन व्यतिरेकसम्भवात् । यद्यप्यस्मदादिशरीरे तस्य सर्वगतत्वात् व्यतिरेको नेति, तन्निरस्यति—युक्तश्चेति । व्यक्त्यात्मनेति । शक्त्यात्मना तत्संयोगस्य सत्त्वेन सर्वगतत्वोक्तिरिति भावः । विवरि-

चन्द्रिका

रेकः । "इतरेण" इति श्रुतौ इतरशब्दो ब्रह्मपरः, पूर्वत्र "मध्ये वामनं" इति वामनशब्दात्, उत्तरत्र च "गुह्यं ब्रह्म सनातनं" इति ब्रह्मशब्दात् । किञ्च मुख्यप्राणस्य जीवनादि-हेतुत्वेऽपि तस्य भगवदधीनत्वेनापि तत्र प्राणशब्दो मुख्यः ।

प्रकाशः

ष्यते चैतद्भूमादिनये । यद्यपि नापि श्रुतिसिद्धमित्यादि, तच्च 'येन जीवन्ति' इत्यादेर्ब्रह्मपरत्वं जन्मादिसूत्रे सिद्धमिति भावेन टीकोक्तकठश्रुतेर्ब्रह्मपरत्वं साधयति—**इतरेणेति** । **वामनेति** । वक्ष्यते च वामनश्रुतेर्वैष्णवत्वं "शब्दादेव" इत्यत्र । प्राणगतस्येशाधीनत्वे साक्षितया टीकोक्तोऽपि "इतरेण" इति श्रुतिस्तद्गतत्वेऽपि प्रमाणं भवतीति भावः । एवं जीवनहेतुत्वं प्राणपदप्रवृत्तिनिमित्तं भगवद्गतमिति समर्थ्येदानीं टीकोक्तरीत्याऽन्यगतं च भगवदधीनमेव । ततश्च प्राणशब्दार्थो भगवानेवेत्यभिप्रेत्याह—**किं चेति** । न च प्रागुक्तासम्भवादिप्रसङ्गः, अनन्याधीनजीवनहेतुत्वस्य भगवन्मात्रगतत्वेनान्यगतत्वाभावात्, तस्यैव लक्षणत्वेन जन्मादिसूत्रे अभिप्रेतत्वादिति तात्पर्यात् । अत एव तद्गतत्वस्यापि समर्थनमकारि । टीकायां तु जन्मादिसूत्रादौ सिद्धत्वात् कण्ठतो नोक्तम् । एवं प्रमेयाश्रितां शङ्कां परिहृत्य, याऽपि प्राणशब्दस्य योगेन विष्णुपरत्वे लक्ष्म्यादिशब्दानामपि प्राणभार्यापरत्वमिति

चन्द्रिका

लक्ष्म्यादिशब्दानां तु बहुत्वादन्यत्रप्रयोगाभावात् मुख्यार्थत्यागापातात् अन्यपरत्वे मानाभावाच्च नान्यत्र यौगिकता । प्राणशब्दस्य त्वेकत्वात् "प्राणस्य प्राणः" इत्यादौ ब्रह्मणि प्रयोगात् तत्र परममुख्यत्वेन मुख्यार्थात्यागात् "नामानि सर्वाणि" इत्यादिमानसद्भावाच्च ब्रह्मपरता ।

आपेक्षिकाच्च मुख्यत्वात् वायौ मुख्यपदं भवेत् ।
यथा पराक्षरपदं श्रीतत्त्वे मध्यमाक्षरे ॥

प्रकाशः

प्रमाणाश्रिता, तां तावत्सङ्गतत्वात्परिहरति- **लक्ष्म्यादीति** । लक्ष्मीश्रीह्रीशब्दानां सत्त्वादिति भावः 'अन्यत्र' प्राणभार्यायाम् । 'लोकतः' इति योज्यम् । तेन न रूढिरिति भावः ।

शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्त्यते ।

इत्यादिस्तु न प्रसिद्ध इति भावः । लक्ष्मीशब्दे तदभावाच्च । अत एव 'लक्ष्म्यादि' इत्युक्तम् । **एकत्वादिति** । मातरिश्वादिश्रुतेर्गतेर्वक्ष्यमाणत्वादिति भावः । 'इत्यादौ' तलवकारे । "प्राणादयो वाक्यशेषात्" इत्यत्र "प्राणस्य प्राण" इत्यादौ वक्ष्यमाणप्राणप्राणत्वादिलिङ्गसाम्याद्वैष्णवत्वमिति भावः । **परमेति** । प्रवृत्तिनिमित्तपौष्कल्यादिति भावः । याऽपि मुख्यपदप्रयोगादिना सूचिता शङ्का, तां निराचष्टे—**आपेक्षिकाच्चेति** ।

चन्द्रिका

मुख्यप्राणो हि करणभूतचक्षुरादिप्राणापेक्षया मुख्यः । दृश्यते च मध्यमाक्षरेऽपि श्रीतत्त्वे "तामक्षरं परं प्राहुः" इत्यादौ परशब्दः, जडप्रकृतिरूपाधमाक्षरात्परत्वात् । अत एव श्रुतिः "प्राण एवाकरणः तस्मान्मुख्यस्तस्मान्मुख्यः" इति, "योऽयं मध्यमः प्राणः" इति च ।

प्रकाशः

श्लोकं व्याचष्टे—मुख्यप्राणो हीति । आपेक्षिकत्वे कथं मुख्यत्वमित्यत उत्तरार्धं व्याचष्टे—दृश्यते चेति ।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥

इत्यदृश्यत्वनयभाष्यस्थस्मृतावित्यर्थः । 'अत एव' आपेक्षिकमुख्यत्वादेव । श्रुतिरिति । "चक्षुरादिवत्तु" इत्यत्र भाष्योक्ता । तथा च न प्राणशब्दपरममुख्यार्थत्वं मुख्यप्राणस्य, किन्तु हरेरेव,

अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ।
तस्मात्प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः ॥

इत्यैतरेयभाष्योक्तेरिति भावः । "अयं वाव शिशुः योऽयं मध्यमः प्राणः" इति बृहदारण्यकोक्त्या हरिरेवोत्तमप्राण इति लाभादिति भावः । यद्यपि श्रीपतित्वादेर्भिन्नप्रकरणगतत्वेन ब्रह्म-

चन्द्रिका

" अद्भ्यः " इत्याद्यनुवाकद्वयस्य भिन्नार्थत्वेऽपि " अद्भ्यः " इत्यत्र श्रीपतित्वादेरिव, " भर्ता सन् " इत्यत्र

तमेव मृत्युममृतं तमाहुः तं भर्तारं तमु गोप्तारमाहुः ।

यस्तद्वेद यत आबभूव सन्धां च या ऽ सन्दधे ब्रह्मणैषः ॥

इत्यादिब्रह्मलिङ्गानां सत्त्वात् । एतदेवाभिप्रेत्य भाष्यादौ " इत्यादितल्लिङ्गात् " इत्यादावादिशब्दः । कथं चानुवाकद्वयं भिन्नार्थम्, " श्रीश्च ते " इति युष्मच्छब्देनोक्तस्य " तद्वै त्वं प्राणः " इत्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानात् । मातरिश्वश्रुतिरपि अन्तरधिकरणन्यायेन " हरिं हरन्तमनुयन्तु देवाः " इति हरिश्रुत्या 'हरन्तं' इति निरुपपदसंहर्तृत्वलिङ्गेन च ब्रह्मपरा । अपानसाहित्यं तु मुख्यप्राणेऽपि न स्वरसम् ।

प्रकाशः

लिङ्गाभावादिति चोद्यं, तदभ्युपेत्य सन्निहितलिङ्गानि तावद्दर्शयति—**अद्भ्य इत्यादीति** । मारकत्वामृतत्वभर्तृत्वगोप्तृत्वमुक्तिहेतुवेदनविषयत्वादिलिङ्गानामित्यर्थः । एकवाक्यतां साधयति—**कथं चेति** । मातरिश्वश्रुतिविरोध इत्यत आह—**मातरिश्वेति** । **अन्तरिति** । तत्राधिदैवगतसर्वशब्दप्रवृत्तिनिमित्तस्य भगवति समर्थनादिति भावः । एतेन श्रुतिबहुत्वमस्तीति प्रथमपक्षोऽपि निरस्तो ध्येयः । ननु " प्राणापानावजिरं " इत्यपानसाहित्यरूपमुख्यप्राणलिङ्गविरोध इत्यत आह—**अपानेति** । **न स्वरसमिति** ।

चन्द्रिका

केचित्तु—"यस्याऽऽत्मा शरीरम्" इत्यादिशास्त्रेण या दृष्टिः 'जीवो ब्रह्मशरीरं शरीरवाची च शब्दः देवमनुष्यादिवत् शरीरिपर्यन्तः' इत्येवंरूपा, सा शास्त्रदृष्टिरित्याहुः। तन्न, उक्तदोषत्वात्। भगवत्यहंशब्दप्रयोगे शरीरशब्दः शरीरिपर्यन्त इति लोकदृष्टेरपि हेतुत्वेन शास्त्रपदप्रयोगे विशेषहेत्वभावाच्च।

प्रकाशः

**केचित्त्विति।** प्रज्ञातजीवभावेन इन्द्रेण "मामेव विजानीहि, मामुपास्व" इत्युपास्यस्य ब्रह्मण एव स्वात्मत्वोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, किन्तु "य आत्मनि तिष्ठन् य आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं" इत्यादिशास्त्रेण जीवब्रह्मणोः शरीरशरीरिभावप्रतिपादनात् शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिशास्त्रेण लब्धत्वात्, तेन शास्त्रेण लोकतश्च जनितया दृष्ट्या ब्रह्मणो जीवशरीरत्वं शरीरवाचिशब्दानां शरीरिपर्यवसानं च जानतो वामदेवस्य 'अहं मनुरभवं" इत्यादौ स्ववाच्याहंशब्देन स्वशरीरकपरब्रह्मोपदेशवदिन्द्रस्यापि "मामुपास्व" इत्यादिना स्वशरीरकपरमात्मदृष्टिकृत इत्यर्थ इत्याहुरित्यर्थः। **उक्तेति।** शास्त्रशब्दस्य ब्रह्मण्येव मुख्यतया मुख्यसम्भवेऽमुख्यवेदग्रहणायोगादस्मद्रीत्या साक्षादेवोपदेशाविषयोक्तिसम्भवे शास्त्रकारणकदृष्टिद्वारोपदेशविषयोक्तेरयुक्तत्वादित्युक्तदोषग्रस्तत्वादित्यर्थः। शास्त्रपदास्वारस्यं चाधिकमित्याह—**भगवतीति।** लोके 'ब्राह्मणमानय' इत्यादौ

चन्द्रिका

यत्तु—"जीवमुख्यप्राण" इति सूत्रस्य परकीयं व्याख्यानं, तत्तल्लिङ्गानुग्रहार्थं किञ्चिदत्र जीववाक्यं, किञ्चिन्मुख्यप्राणवाक्यं, किञ्चिद्ब्रह्मवाक्यं, तथा च त्रयोऽप्युपास्या इति चेन्न, उपासात्रैविध्यप्रसङ्गात्, अन्यत्र "प्राणस्य प्राणम्" इत्यादिवाक्यान्तरे ब्रह्मलिङ्गैः प्राणशब्दे ब्रह्मपरताया आश्रितत्वात् इहाऽपि हिततमत्वादिब्रह्मलिङ्गयोगादिति, तन्न, "अपीतौ तद्वत्प्रसङ्गात्" इत्यादिवत् प्रसङ्गपदाभावात्। "मामेव विजानीहि" इतीन्द्रलिङ्गस्यापि सत्त्वेन चातुर्विध्यादिति वक्तव्यत्वाच्च। पूर्ववादिनं प्रति इष्टापत्तेश्च।

प्रकाशः

शरीरिपर्यन्तत्वप्रतीतेरिति भावः।

**यत्त्विति**। विवृतमेतत्प्राक्। **त्रैविध्यप्रसङ्गादिति**। ब्रह्ममात्रग्रहणे तु नैवमिति भावः। कथं तर्हि प्राणशब्दो ब्रह्मणीत्यतः प्रवृत्तं—**आश्रितत्वादिति**। तस्यार्थमाह—**अन्यत्रेति**। **चातुर्विध्यादिति**। नन्विन्द्रलिङ्गं 'शास्त्रदृष्ट्या' इत्यनेनैव परिहृतं, न पुनरत्र शङ्कार्हमिति चेत्, तर्हि जीवमुख्यप्राणलिङ्गानामपि ब्रह्मैक्याङ्गीकारेण समाधातुं शक्यत्वेन साम्यात्, तथोपास्यत्वेन पुनः शङ्केत्यस्यापि साम्यादिति भावः। **इष्टापत्तेरिति**। तेनैव त्रिविधोपासनाया अङ्गीकृतत्वादिति भावः। ननु नायं दोषः, उपासनात्रैविध्यस्य पूर्वपक्षयुक्तित्वेन सिद्धान्ते तत्प्रसङ्गस्यानापाद्यत्वात्। किंतु "मामेव विजानीहि" इत्युपक्रम्य "प्राणोऽस्मि प्रज्ञात्मा" इत्युक्त्वा "स एष प्राणः" इत्युपसंहारेण ब्रह्मण्यवगतेनैक-

चन्द्रिका

ननूपक्रमोपसंहारैकरूप्यादेकवाक्यताऽवगता । अत एव भामत्यां भाष्यमुल्लङ्घ्य त्रिविधोपसनापरत्वेन वाक्यभेदेन पूर्वपक्षं प्रापय्य, तदेकवाक्यतप्रतीतेः ब्रह्ममात्रपरत्वमिति सिद्धान्तितमिति चेत्, उच्यते—

बुद्ध्यादिपरमत्रैव सा प्रज्ञेत्यादिकं यथा ।
मामुपास्वेत्यादिवाक्यं तथाऽस्त्विन्द्रादिगोचरम् ॥

अत्रैव ब्रह्मपरवाक्यसमुदाये यथा—"यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इत्येकदेशो ज्ञानक्रियाशक्त्याश्रयबुद्धिप्राणपरः, सिद्धान्तेऽपि प्रज्ञाप्राणशब्दयोरुत्क्रमणादिलिङ्गैर्बुद्धिवायुपरत्वात्, तथा पूर्वपक्षेऽपीन्द्रादिलिङ्ग स्वारस्यार्थं तत्तद्वाक्यमिन्द्रादिपरमस्तु । 'आश्रितत्वात्' इत्यत्र च प्रकृतत्रैविध्यस्यैव अन्वयसम्भवे 'ब्रह्मपरतायाः' इत्यध्याहारो न युक्तः । 'तद्योगात्' इति च सर्वनाम्नस्सन्निकृष्टत्रैविध्यपरत्वसम्भवे

प्रकाशः

वाक्यत्वेनेति वाचस्पतिमतमाशङ्क्य निरस्यति—**नन्विति** । विवृतं चैतत्प्रागस्माभिः । एकवाक्यत्वावगमेऽपि न पूर्वपक्षोपमर्दः संभवतीति भावेनाह—**उच्यत इति** । पूर्वार्धं व्याचष्टे—**अत्रैवेति** । 'एकदेशः' किञ्चिद्वाक्यं । ज्ञानशक्त्याश्रयबुद्धेः क्रियाशक्त्याश्रयप्राणस्य च प्रतिपादकं यथेत्यर्थः । तत्र विगानमाह—**सिद्धान्तेऽपीति** । उत्तरार्धं व्याख्याति—**तथेति** । सूत्रखण्डार्थेऽप्यनुपपत्तिमाह—**आश्रितत्वादिति** । उपलक्षणं चैतत्, 'अन्यत्र'

चन्द्रिका

विप्रकृष्टब्रह्मलिङ्गपरत्वमयुक्तम् । 'तद्योगात्' इत्यस्य 'अनुगमात्' इत्यनेन पुनरुक्तिश्च ।

इतरे तु—प्राणधर्मेण बुद्धिधर्मेण स्वधर्मेण च ब्रह्मोपासायास्त्रैविध्यात् ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं न विरुद्धमिति व्याचक्षते । तन्न, अन्यधर्मेणान्योपासने ब्रह्मधर्मादिना जीवोपासायास्त्रैविध्यात्

प्रकाशः

इत्यस्याप्यध्याहार इत्यपि ध्येयम् । विप्रकृष्टेति । 'अनुगमात्' इत्यनेनोक्तेत्यर्थः । **पुनरुक्तिरिति** । हिततमत्वादिलिङ्गपर्यालोचनया ब्रह्मत्वावगमादिति व्याख्यातत्वादिति भावः ।

एवं भाष्याभिमतं निरस्येदानीं यत्प्राचां वृत्तिकृतां मतं 'अथवा' इत्यादिना परभाष्य एवोपन्यस्तं, तदनूद्य निरस्यति—**इतरे त्विति** । "शरीरं परिगृह्योत्थापयति" इति प्राणधर्मेण, "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति" इति प्रज्ञाशब्दितबुद्धिधर्मेण, क्रियाज्ञानशक्तिद्वयाश्रयप्राणबुद्धिरूपोपाधिधर्मेणेति यावत्, "प्राण एव प्रज्ञात्माऽजरः" इत्यादिब्रह्मधर्मेण चैकस्यैव ब्रह्मण उपासनायास्त्रैविध्यादन्यत्र "मनोमयः प्राणशरीरो भारूपः" इत्यादौ उपाधिधर्मेण ब्रह्मण उपासनाया आश्रितत्वादिहापि तद्योगादिति यथाश्रुतमेव, न तु प्रसङ्गशब्दाध्याहार इत्यर्थः । पूर्वं प्राणस्यैकमुपासनं, अपरं जीवस्य, अपरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसङ्गो दूषणमुक्तं पूर्वपक्षिणं प्रति । इह तु ब्रह्मण एकस्यैवोपासनात्रयविशिष्टस्य विधानान्न वाक्यभेद इति भावः । यद्यपीदं

चन्द्रिका

जीववाक्येऽपि ब्रह्मलिङ्गं न विरुद्धमिति वैपरीत्यप्रसङ्गात् ॥

केचित्तु— चिद्विशिष्टत्वेन अचिद्विशिष्टत्वेन स्वरूपेण चेत्युपासायाः त्रैविध्यम्। न च वाक्यभेदः, "तं मामायुरमृतमित्युपास्व" इत्येकस्मिन्नेव वाक्ये 'मां' इति जीवविशिष्टायाः 'आयुः' इति प्राणविशिष्टायाः, 'अमृतं' इति स्वेन रूपेण चोपासनाया विधा-

प्रकाशः

मतं भामत्यामेव वाक्यभेदप्रसङ्गेन दूषितं, तथाऽपि प्रबलदोषकथनायैतदुपन्यासः। **जीवेति**। बुद्ध्यवच्छिन्नस्यैव जीवत्वादिति भावः।

**केचित्त्विति**। प्रसङ्गशब्दानध्याहारेण भोक्तृजीवशरीरकत्वरूपचिद्विशिष्टत्वानुसन्धानाय, भोग्यभोगकरणभूतप्राणशरीरकत्वरूपाचिद्विशिष्टत्वानुसन्धानाय, स्वरूपेण चिदचिल्लक्षणद्वारमन्तरेण गुणविशिष्टानुसन्धानाय चेति त्रिविधोपासनाय जीवलिङ्गानामत्रोपदेशात्। एवं त्रिविधानुसन्धानस्य "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानं चाविज्ञानं च" इत्यादिषु प्रकरणान्तरेष्वाश्रितत्वात् इहापि त्रिविधानुसन्धानस्य युक्तत्वादित्यर्थ इत्याहुरित्यर्थः। श्रुतप्रकाशोक्तं समाधानमाह—**तं मामिति**। यत्र जीवविशेषाणामचेतनविशेषाणां परमात्मासाधारणधर्मयोगः, तत्र चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति भावः। अत्र "शरीरं परिगृह्योत्थापयति" इति प्राणलिङ्गनिर्वाहायाचिद्विशिष्टत्वेनानुसन्धानं यदुक्तं, तदयुक्तं, प्राणस्य चेतनत्वात्। तथा च द्वैविध्यमेवोपासनस्य न

चन्द्रिका

नादित्याहुः। तन्न, "तान् वरिष्ठः प्राण उवाच" य एवायं मुख्यः प्राणः" "अपहतपाप्मा ह्येषः" इत्यादिश्रुत्या मुख्यप्राणस्य चेतनत्वात् तल्लिङ्गनिर्वाहाय अचिद्विशिष्टोपासनोक्त्ययोगात् ॥

प्रकाशः

त्रैविध्यमिति भावेन दूषयति— **तन्नेति**। **अपहतेति**। न ह्यचेतनस्य पापप्रसक्तिरस्तीति भावः। उपलक्षणमेतत्, 'आश्रितत्वात्' इत्यस्य 'इह' इत्यनेनान्वयोपपत्तावन्यत्रेत्यध्याहारायोग इत्याद्यपि ध्येयम्।

एतेन यत्केनचित्प्रलपितं—"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इत्यत्रेन्द्रवाक्ये उपासनाकर्मत्वेनेन्द्रशब्दनिर्दिष्ट. किमिन्द्र उत शिव इति सन्देहे, वृष्टिद्वारा सकलरक्षकत्वरूपप्राणत्वस्य "इन्द्रो राजा जगतो य ईशे" इति श्रुत्या परमैश्वर्येण सर्वोपास्यत्वस्य च सम्भवाज्जीवलिङ्गानां च जीवविशेषेन्द्र एव पर्यवसानात् प्राणलिङ्गे सत्यपि प्राणस्येन्द्रविशेषणत्वप्रतीतेः जीववायुपक्षयोरनुत्थानादिन्द्र एवेति प्राप्ते, अजरामृतत्वादिलिङ्गानामनुगमादुपसंहारेऽवगमाच्छिव एवेति सिद्धान्त इति। उक्तं च—

प्राणोऽस्मीत्युक्त इन्द्रः स हि जगदखिलं प्राणयत्यम्बुवर्षैः
इन्द्रो राजेत्यनेकश्रुतिमितमहिमा स्यादुपास्यश्च मुक्त्यै।
मैवं क्षुण्णः स सृज्यस्तमजरममृतं शक्नुमो नैव वक्तुं
तस्मात्तं मामुपास्वेत्यखिलपरिवृढे योज्यतां शास्त्रदृष्ट्या ॥

प्रकाशः

इति, तन्निरस्तं, इन्द्र इत्येव पूर्वपक्षे सति सूत्रे "जीवमुख्यप्राणलिङ्गात्" इति शङ्काऽयोगात । तत्र जीवादिशब्दस्य तद्विशेषेन्द्रपरत्वे च वक्तुरात्मोपदेशस्यापीन्द्रलिङ्गस्य अनेनैव सङ्ग्रहसम्भवेन "न वक्तुः" इति पृथक् शङ्काऽयोगात् । प्राणस्येन्द्रविशेषणत्वेनाप्राधान्ये सूत्रे धर्मिनिर्देशाय प्राणपदप्रयोगायोगाच्च । प्राणत्वस्य विष्णावेव प्राणाधिकरणे साधितत्वाच्च । अमृतत्वादेः "त्रिपादस्यामृतं दिवि" इत्यादौ विष्णुधर्मत्वस्योक्तत्वाच्च । शिवस्यापि "रुद्रस्य शिर उत्पिपेष" इत्यादेरमृतत्वाद्ययोगाच्च। यदपि—"न वक्तुः" इत्यादीनां रामानुजरीत्याऽर्थकथनं, तदपि तद्दूषणेनैव निरस्तम् । यच्चोक्तं शिवार्कमणिदीपिकायां—ऐतरेये "प्राणो वा अहमस्मृग्रषे" इत्यत्र "प्राणः सर्वाणि भूतानि" इत्यादिना सार्वात्म्यस्य ब्रह्मलिङ्गस्य सत्त्वेन प्राणस्य ब्रह्मत्वं निश्चितमिति तत्र न सन्देहः । "प्राणोऽस्मि प्रज्ञात्मा" इत्यत्र तु त्वाष्ट्रवधादीन्द्रलिङ्गात् "शरीरं परिगृह्य" इत्यादिप्राणलिङ्गाच्च वैषम्यमिति, मूर्खप्रलपितमेतत् , तत्रेवात्रापि भूयसां ब्रह्मलिङ्गानां सत्त्वात् । तत्र ब्रह्मत्वस्यात्रत्यन्यायं विनाऽन्येनासिद्धेः । इन्द्रादिलिङ्गानां निरवकाशानां भूयसां दर्शितत्वाच्च । तस्यैवोदाहरणे सूत्रोक्तत्रयकोटिकपूर्वपक्षसंभवेन सूत्रस्य सामञ्जस्यस्योक्तत्वाच्च । संशयबीजस्य टीकायमेवोक्तत्वाच्चेति ॥

### चन्द्रिका

टीकाक्षरार्थस्तु—ननु " एतद्ध स वै तद्विद्वानाह हिरण्यदन्वैदः " इति हिरण्यदन्वैदवत् महिदासोऽपि ऋषित्वेनोच्यतामित्यत आह—**न हि महिदासोऽपि मुनितयैवोच्यते वैयर्थ्यादिति**। अस्या उपनिषदः ऐतरेयसञ्ज्ञयैव इतरापुत्रस्य महिदासस्य ऋषित्वसिद्ध्या तदुक्तिनैष्फल्यादित्यर्थः। यद्वा—ऋषिमात्रत्वे महिदासस्य " इतःप्रदाना ह्येत इतस्सम्भृताः " इत्यादिना देवतापदप्रदातृत्वं तत्पोषकत्वमित्यादीनां उपास्यब्रह्मधर्माणामुक्तेर्नैष्फल्यादित्यर्थः। यद्वा—महिदासस्य मुनित्वेनाप्युक्तिरिष्टा, मुनित्वेनैवोक्तिः न तु ब्रह्मतयेति तु न युक्तम्, " इतःप्रदाना ह्येत इतस्सम्भृताः " इत्यादीनां ब्रह्मधर्मवाचिनां विरुद्धार्थत्वादित्यर्थः॥

### प्रकाशः

अधिकरणान्ते टीकायां " न हि महिदासो मुनितयैवोच्यते, वैयर्थ्यादेव " इत्येतद्वाक्ये वैयर्थ्यादित्ययुक्तम्, ऋषिज्ञानार्थत्वादित्यतोऽवतार्यार्थमाह—**नन्विति**। **ऋषित्वेति**। ऋषिज्ञानस्यान्यथासिद्धेरित्यर्थः। ' **वैयर्थ्यात्** ' इत्यत्र प्रतियोगिनमध्याहृत्यार्थान्तरमाह—**यद्वेति**। इतः प्रदानं येषान्त इति पददातृत्वं, ' सम्भृताः ' इति पोषकत्वमिति ध्येयम्। ' उपास्यानां ब्रह्मधर्माणामित्यर्थः। विशब्दस्य विरुद्धार्थत्वं मत्वाऽन्यथा योजयति—**यद्वेति**। शिष्टं सुगममिति भावः।

चन्द्रिका

अत्र चाद्या पञ्चाधिकरणी समन्वयविशेषाप्रतिपादकत्वादध्यायपादबहिर्भूता तदुपोद्घातत्वेनैका पेटिका। तत्राप्याद्यं शास्त्रमात्रोपोद्घातरूपम्। इतरा चतुरधिकरणी तु शास्त्रान्तर्गताऽपि अध्यायोपोद्घातरूपा। आनन्दमयाधिकरणमारभ्यापादपरिसमाप्ति समन्वयपरत्वेन एका महापेटिका। तत्राप्यानन्दमयान्तरधिकरणे बहुविषयकपूर्वपक्षयुक्तत्वेन, अन्तरादिचतुरधिकरणी तु साक्षादानन्दमयाक्षेपकपूर्वपक्षयुक्तत्वेन, तत्राप्याकाशादित्रयमन्तरधिकरणन्यायातिदेशकत्वेन भूते प्रसिद्धनामविषयकत्वेन चैकाऽवान्तरपेटिकेत्याद्यूह्यम् ॥

प्रकाशः

एतत्पादीयद्वादशाधिकरणानां प्रमेयस्य सुज्ञानाय पेटिकासङ्गतिमाह—**अत्रेति**। समन्वयसूत्रे सामान्यतः प्रतिपादनात् 'विशेष' इत्युक्तम्। समन्वयाप्रतिपादने किमर्थमत्र निवेश इत्यत उक्तं—**उपोद्घातत्वेनेति**। एतच्चेक्षत्यधिकरणे स्पष्टम्। **तत्राप्याद्यमिति**। यथा चैतत् तथोक्तं जिज्ञासाधिकरणे। **युक्तत्वेनेति**। 'एकाऽवान्तर पेटिका' इत्यन्वयः। आदिपदेन च्छन्दःप्राणाधिकरणयोः बहुश्रुतिलिङ्गविषयत्वेन वा ज्योतिःप्राणद्वाराऽऽनन्दमयाक्षेपकत्वेन वा अन्यत्रप्रसिद्धश्रुतिलिङ्गोत्कीर्तनस्य प्रयोजनोक्तिपरत्वेन वैका पेटिका। एवमुत्तरपादेष्वपि ध्येयमिति भावः।

चन्द्रिका

शब्दास्सामान्याधिदैवाधिभूताध्यात्मगोचराः ।

ससूक्ता अधिवेदस्थास्सलिङ्गाश्चात्र चिन्तिताः ॥

अस्मिंश्च पादे "आनन्दमयः" इत्यत्र सामान्यशब्दाः, "अन्तः" इत्यत्र अधिदैवगताः, "आकाशः" इत्यत्र अधिभूतगताः, "अत एव प्राणः" इत्यत्र अध्यात्मगताः, "ज्योतिः" इत्यत्र सूक्तसहिताः, "छन्दः" इत्यत्र अधिवेदगताः, "प्राणस्तथा" इत्यत्र लिङ्गसहिताः शब्दा विचारिता इति ॥

इति श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण श्रीव्यासयतिना
विरचितायां श्रीमद्भाष्यटीकाविवृतौ तात्पर्यचन्द्रिकायां
प्रथमाध्यायस्य प्रथमः पादः

प्रकाशः

सप्तानामप्यधिकरणानां विषयोपाधीन् सङ्गृह्य विशदयति—**शब्दा इति** । गुणिसामान्यवाचका इत्यर्थः । **लिङ्गेति** । पूर्वपक्षप्रापकानेकलिङ्गसहिता इत्यर्थः । **शब्दा इति** । नामात्मका विष्णौ समन्विता इत्यर्थः ॥

इति श्रीमत्सर्वतन्त्रस्वतन्त्रसुधीन्द्रगुरुपादशिष्य-
राघवेन्द्रयतिकृते चन्द्रिकाप्रकाशे प्रथमाध्या-
यस्य प्रथमः पादः



ओम्

श्रीहयग्रीवाय नमः श्रीगुरुभ्यो नमः

# अथ टीका-चन्द्रिका-प्रकाशसमेते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्याये द्वितीयःपादः.

## -- अथ सर्वगतत्वाधिकरणम् --

लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे प्राधान्येन । ब्रह्म ततम् '' इति सर्वगतत्वमुक्तं विष्णोः ।

---

तत्त्वप्रकाशिका

एतत्पादप्रतिपाद्यं दर्शयति- **लिङ्गेति । लिङ्गात्मकानामिति** । धर्मविशिष्टधर्मिवाचिनामित्यर्थः । 'अन्यत्र प्रसिद्धानां' इति संयोज्यम् । वैश्वानराधिकरणे नामसमन्वयसिद्धेः 'प्राधान्येन' इत्युक्तम् । अत्र लोकतोऽन्यत्रप्रसिद्धाऽऽदित्यश्रुतिसहपठितसर्वगतत्वलिङ्गात्मकशब्दस्य परब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः श्रुत्यादिसङ्गतिं विषयसंशयौ च सूचयति— **ब्रह्मेति** । "ब्रह्म ततम्" इति विष्णोस्सर्वगतत्वमुक्तम् । तदेवैतरेयके "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्याम्नायते । तद्यदि विष्णोरन्यस्य स्यात्, तर्हि प्राचीनप्राणोऽप्यन्य

तच्च "तस्यैतस्यासावादित्यो रसः" इत्यादिना आदित्यस्य प्रतीयते । अतोऽब्रवीत् —

## ओम् सर्वत्र प्रसिद्धोपदेशात् ओम् ॥ १ ॥

"स यश्चायमशरीरः प्रज्ञात्मा" इत्यादिना

तत्त्वप्रकाशिका

एव स्यादेकप्रकरणत्वात् । अतोऽवश्यं विचार्यं भवति । तत्सर्वगतत्वं विषयः । विष्णोरन्यस्य वेति सन्देहः । "ब्रह्म ततमं" इत्युक्तिरादित्यश्रुतिश्च सन्देहबीजमिति भावः । तत्र सयुक्तिकं पूर्वपक्षयति—**तच्चेति** । तत्सर्वगतत्वमादित्यस्यैव भवेत्, "तस्यैतस्यासावादित्यो रसः, यश्चासावादित्यः तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति" इत्यादि बह्वादित्यश्रुतेः । "सूर्य आत्मा जगतः" इति सौरमन्त्रोदाहरणाच्च । 'एतमस्यां' इति क्षित्यादिषूक्त्वाऽऽदित्येऽस्यानुक्तत्वलिङ्गाच्च । अन्यथा 'एतमादित्ये' इत्युक्तिस्स्यात्, सजातीयचन्द्रादावुदितत्वात् । अत एव न श्रुतेरन्तर्यामिविषयत्वं युज्यते । सर्वजीवानां वा एतत्सर्वगतत्वमुच्यते, "चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा" इति तल्लिङ्गश्रवणात् । न च तल्लिङ्गमन्तर्यामिविषयम्, तस्यापरिच्छिन्नत्वेन "सर्वेषु भूतेषु" इत्युक्ताल्पौकस्त्वायोगात् । चक्षुर्मयत्वाद्ययोगाच्च । अतो विष्णवन्यस्यैव सर्वगतत्वादन्यस्यैव प्राणत्वमानन्दमयत्वं चेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे—**अत इति** । "स यश्चायं"

सर्वत्रोच्यमानो नारायण एव, "तदेव ब्रह्म परमं कवीनाम्" "परमं यो महद्ब्रह्म"

वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत् ।
स हि सर्वगुणैः पूर्णः तदन्ये तूपचारतः ।

इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥

## ओम् विवक्षितगुणोपपत्तेश्च ओम् ॥ २ ॥

"स योतोऽश्रुतः" इत्यादि ।

तत्त्वप्रकाशिका

इत्यादिना वाक्येन 'सर्वत्र' पृथिव्यादिषूच्यमानो नारायण एव, "एतमेव ब्रह्मेत्याचक्षते" इति सर्वगते ब्रह्मशब्दोपदेशात् । ब्रह्म-शब्दस्य च श्रुत्यादौ नारायण एव प्रसिद्धत्वादित्यर्थः । तथा च श्रुतिः—

यच्च किञ्च जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इति । अत्र "स यश्चायं" इति वाक्योदाहरणं पूर्वं विष-यवाक्यस्यानुदाहृतत्वात्कृतमशरीरत्वयुक्तिसूचनार्थं च । न हि नाराय-णेतरचेतनानां स्वतोऽशरीरता सम्भवति ॥ १ ॥

युक्त्यन्तरेण विष्णोरेवात्रोक्तसर्वगतत्वं प्रतिपादयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—**विवक्षितेति** । "स योऽतोऽश्रुतोऽगतोऽ-ऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टा देष्टा

स हि "न ते विष्णो जायमानो न जातो देव" इत्यादिनाऽश्रुतत्वादिगुणकः । "स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्तः" इत्यादि चतुर्वेदशिखायाम् ॥ २ ॥

न चादित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम्,

**ओम् अनुपपत्तेस्तु न शारीरः ओम् ॥ ३ ॥**

एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥

---

तत्त्वप्रकाशिका

घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतनामन्तरपुरुषः" इति सर्वगते अश्रुतत्वादिगुणश्रवणात्, तेषां च विष्णोरेव योग्यत्वेन तस्मिन्नेवोपपत्तेरन्यत्रानुपपत्तेश्च विष्णुरेवायं सर्वगत इति भावः । 'विवक्षिताः' इति वक्तुं योग्याः । नन्वेतद्गुणानां कुतो विष्णुनिष्ठत्वमित्यत आह—स **हीति** । ते महिम्नः परमन्तं कोऽपि श्रोत्रादिना नापेत्यर्थः । अत्र मुखतोऽश्रुतत्वादिकं विष्णोर्न श्रूयत इत्यतः स्पष्टश्रुतिं चाह—**स इति** । अत्रातत्वस्यादिमत्वेऽपि तस्य सर्वगतत्वानतिरिक्तत्वेन साध्यत्वादश्रुतत्वादीनामेव ग्रहणम् ॥ २ ॥

ननु यथा ब्रह्मशब्दादश्रुतत्वादिलिङ्गैश्च विष्णुः सर्वगत इत्युच्यते, तथा आदित्यशब्दात्सर्वजीवलिङ्गाच्च आदित्यः सर्वजीवा वा किं न स्युरित्यत आह—न **चेति** । 'जीवस्सर्वगतः' इति शेषः । तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य प्रतिज्ञांशस्य सम्बन्धभाष्येणैव व्याख्यातत्वाद्धेत्वंशमेव व्याचष्टे— **अनुपपत्तेरिति** । भवेदन्यस्य

# ओम् कर्मकर्तृव्यपदेशाच्च ओम् ॥ ४ ॥

## "आत्मानं परस्मै शंसति" इत्यादि ॥ ४ ॥

तत्त्वप्रकाशिका

सर्वगतत्वं, यद्यन्यस्मिन्ननुपपद्येत । न चोपपद्यते । तथाहि— किं मिलितसर्वजीवानां सर्वगतत्वं उत प्रत्येकमुच्यते । नाद्यः, तत्कथनवैयर्थ्यात्, स्वस्वदेहस्थितिमात्रस्य सिद्धत्वात् । न द्वितीयः, सर्वशरीरगतसुखदुःखादिप्राप्त्यैकस्य सर्वशरीरस्थत्वानुपपत्तेः । अतोऽन्यप्रापकसद्भावेऽपि तस्य सर्वगतत्वानुपपत्तेरेव न जीवोऽयं सर्वगत इत्याशयः । तु शब्द एवार्थः । न च वाच्यं स्वकर्मनिर्मितमेवास्य भोगायतनमिति न भोगाव्यवस्था श्रीह्यादिगतजीवान्तरवदिति, अनादितः सर्वेषां सर्वशरीरस्थत्वे कर्मभेदस्यापि साधयितुमशक्यत्वात् । न चाऽऽदित्यस्यास्तु सर्वशरीरस्थत्वं, भवदभ्युपगमादिति वाच्यम्, तस्यापि ब्रह्मादिसर्वशरीरस्थत्वानुपपत्तेः ॥ ३ ॥

युक्त्यन्तरेण जीवस्याप्रोक्तसर्वगतत्वं पराकुर्वत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति—कर्मेति । अत्रोक्तसर्वगतस्य 'आत्मानं' इति कर्मत्वेन व्यपदेशाज्जीवस्य च 'शंसति' इति कर्तृत्वेन व्यपदेशादेकस्यां क्रियायां कर्मकर्त्रोरुत्सर्गतो भिन्नत्वनियमादत्र चापवादकारणाभावाच्च नायं सर्वगतः शारीर इति भावः । न चैकस्सर्वगतो जीवस्सर्वगतं जीवान्तरं शंसतीति योज्यम् । सर्वगततया सर्वजीवाग्रहणापातात् । तथा प्रतीत्यभावेन क्लिष्टकल्पनत्वाच्च । आदिपदेन "आत्मानं वेद" इत्यस्य ग्रहणम् ॥ ४ ॥

## ओम् शब्दविशेषात् ओम् ॥ ५ ॥

" एतमेव ब्रह्मेत्याचक्षते " इति । न हि जीवमेव ब्रह्मेत्याचक्षते । एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्दः " इति चेन्द्रद्युम्नशाखायाम् ॥ ५ ॥

---

तत्त्वप्रकाशिका

यदुक्तं ब्रह्मशब्दाद्विष्णुरेव सर्वगत इति, तदयुक्तम्, ब्रह्मशब्दस्य जीवेष्वपि सम्भवात् । न चासौ जीवेऽमुख्य इति तदग्रहः, अमुख्यार्थस्यापि चक्षुर्मयत्वादिबाधेन ग्रहणोपपत्तेः । न चाश्रुतत्वादिगुणानुपपत्तिः, " श्रुत्वाऽप्येनं वेद न चैव कश्चित् " इति जीवस्याप्यश्रुतत्वादिश्रवणात् । न च " अनुपपत्तेः " इत्युक्तदोषः, विष्णावपि तस्य साम्यात् । न च " कर्मकर्तृव्यपदेशाच्च " इत्यभिहितदोषप्राप्तिः, चक्षुर्मयत्वादिबाधकेनैकस्यैव कर्मकर्तृत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति— **शब्देति** । नानेन ब्रह्मशब्देन जीव उच्यते, ब्रह्मशब्दस्य " एतमेव " इत्यवधारणाख्यविशेषवत्त्वादित्यर्थः । ब्रह्मशब्दस्य सावधारणत्वेऽपि कुतो न जीवे वृत्तिरित्यत आह— **न हीति** । सावधारणब्रह्मशब्दवाच्यत्वे मुख्यब्रह्मत्वं स्यात् । न च तज्जीवस्योपपद्यत इति भावः । विष्णावपि सावधारणब्रह्मशब्दश्रुतिः कुत इत्यत आह— **एष इति** ॥ ५ ॥

# ओम् स्मृतेश्च ओम् ॥ ६ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**गामाविश्य च भूतानि धारयाम्यहमोजसा ॥**

**इत्यादि । न चाप्रामाणिकं कल्प्यम् ॥ ६ ॥**

तत्त्वप्रकाशिका

स्मृतिसमाख्ययाऽपि विष्णोरत्रोक्तसर्वगतत्वं साधयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति—**स्मृतेश्चेति** । न च वाच्यं स्मृतेरपि स्ववचनत्वेन कथं विप्रतिपन्नं प्रति सूत्रकारस्तामुपादत्त इति, तस्याः परोक्तानुवादरूपत्वात् ॥ एवं सूत्राणि व्याख्याय परकृतापव्याख्यां प्रत्याख्याति— **न चेति** । ईश्वर एव मनोमयत्वादिगुणो न जीव इति प्रतिपादिते, जीवेश्वरयोरैक्यात् कथमेतदित्याशङ्क्य केनचिदुक्तम् नायं पारमार्थिको भेदः, किन्त्वत्र मिथ्याभूत एव सूत्रकृता विवक्षित इति । तद्भेदस्य मिथ्यात्वं न कल्प्यम्, भेदमिथ्यात्वे मानाभावादित्यर्थः । जीवेशभेदो मिथ्या भेदत्वात् चन्द्रभेदवत् इत्यनुमानं मानमिति चेन्न, मिथ्येत्यस्यासत्त्वाभिप्रायेऽपसिद्धान्तात् । अनिर्वाच्यत्वाभिप्राये अप्रसिद्धविशेषणत्वात् । सत्त्वाभावसाधने तत एवासत्त्वापत्तेः । बाध्यत्वसाधनेऽप्यन्यथाज्ञातस्य सम्यग्ज्ञातत्वं चेद्बाध्यत्वं, तत्सिद्धसाधनम् । त्रिकाले स्वरूपनिषेधविषयत्वं चेदसत्त्वापत्तिः । प्रतीतस्येति चेदसदपरोक्षतया प्रतीयते, वाच्यत्वादित्यसतोऽपि प्रतीतिसिद्धेः । भेदाभावे

# ओं अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ओं ॥ ७ ॥

"सर्वेषु भूतेषु" इत्यल्पौकस्त्वात् चक्षुर्मयत्वादिना जीवव्यप-

---

तत्त्वप्रकाशिका

भेदत्वसामन्यस्याप्यसिद्धेश्च, व्यक्त्यभावेन सामान्यायोगात् । भेदत्व-हेतोरविद्यानिवृत्तिरूपमोक्षात्मभेदे व्यभिचाराच्च । न चासावपि भेदो मिथ्येति युक्तम्, मोक्षनिवृत्त्यापातात् । मिथ्याभूतस्याप्यनिवर्त्यत्वे प्रकृतभेदस्यापि तथात्वं नानिष्टम् । न चात्ममोक्षयोर्भेदाभावः, आत्मनोऽनादिनित्यतया तदभिन्नमोक्षस्य ज्ञानसाध्याविद्यानिवृत्ति-रूपत्वानुपपत्तेः । "द्वा सुपर्णा" इत्यादिश्रुतिविरोधाच्च । अन्यतरचन्द्रस्यैवाऽऽरोपितत्वेनाऽऽरोपितानारोपितभेदस्य सत्यत्वाच्च । अतो न भेदमिथ्यात्वे मानमित्यलम् ॥ ६ ॥

उक्तार्थमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद्व्याचष्टे—

**अर्भकेति** । यदुक्तं सर्वत्रोच्यमानो नारायण एवेति, तद-युक्तम्, यथा खलु जीवप्रापकसद्भावेऽप्यनुपपत्त्या तस्य सर्वगत-त्वाभावः, तथेश्वरप्रापकसद्भावेऽपि, बाधकसद्भावात्, "सर्वेषु भूतेषु" इत्यस्याल्पस्थानस्थितिकथनात् । चक्षुर्मयत्वादिरूपेण जीवलिङ्गकथनाच्च । आदित्यश्रुतेश्च । न ह्यपरिच्छिन्नस्य सर्वजीवधर्मरहितस्य भगवतोऽर्भकौकस्त्वादिकथनं युज्यते । अतः पक्षद्वयेऽपि समसाधक-बाधके न विष्णुरेवायं सर्वगत इति पक्षपातो युक्त इति भावः ।

देशाच्च नेति चेत् न, अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् । सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत्

सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।
सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः ॥

इति स्कान्दे ॥ ७ ॥

---

तत्त्वप्रकाशिका

परिहारांशं व्याचष्टे—नेति । न पक्षद्वयस्यापि साम्येन विष्णोरसर्वगतत्वाभाव इति युक्तम्, बाधकाभावात् । तथा हि—किमपरिच्छिन्नादिरूपस्यार्भकौकस्त्वादिकथनमप्रयोजनमयुक्तं वा । आद्यं दूषयति—अर्भकेति । अपरिच्छिन्नस्य जीवविलक्षणस्यापि हरेरर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण चोपास्यात्वान्न तदुक्तिर्व्यर्थेति भावः । द्वितीयेऽपि सर्वगतस्याल्पौकस्त्वं तावन्नायुक्तमित्याह—सर्वगतत्वेऽपीति । नापि जीवविलक्षणस्य चक्षुर्मयत्वाद्ययुक्तम्, "सर्वेन्द्रियमयः" इति स्मृत्या सर्वप्राणिगतेन्द्रियस्वामित्वेन चक्षुर्मयत्वादेरुक्तत्वादित्याशयेनाह—सर्वेति । "सर्वनामाभिधेयश्च" इत्यनेनैवाऽऽदित्यशब्दस्येश्वरवाचित्वं चोक्तं भवति । न चाऽऽदित्येऽनुक्तिविरोधः, "सर्वप्राणिषु च स्थितः । सर्वनामाभिधेयः" इति स्मृत्याऽऽदित्यादिगतस्यैवाऽऽदित्यादिनामवत्त्वोक्तेः ॥ ७ ॥

पुनरुक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे—सम्भोगेति । यदुक्तमेकस्य सर्वशरीरस्थत्वं सर्वसमानभोगप्राप्तेरयु-

## ओम् सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ओम् ॥८॥

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेत् न, सामर्थ्यवैशेष्यात् । उक्तं च गारुडे—

सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ।
स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः ॥

इति च ॥ ८ ॥

तत्त्वप्रकाशिका

क्तमिति, तदीश्वरपक्षेऽपि सममेव, जीवपरयोरेकशरीरस्थत्वे परस्यापि जीवसमानभोगप्राप्तेः । न हि दह्यमानगेहगतयोरन्यतरस्यैव दाह इति युक्तम् । तथा चेश्वरपक्षस्यापि दोषित्वन्नायं सर्वगत इति भावः । परिहारांशं व्याचष्टे—**नेति** । न जीवेशयोरेकशरीरस्थत्वेऽपि समानभोगप्राप्तिः, ईश्वरस्य तदप्राप्तौ जीवादपि सामर्थ्यवैशेष्यात्, अग्निस्तम्भनवतो दाहाभाववदिति भावः । किं तत्सामर्थ्यवैशेष्यं, येन समानभोगाप्राप्तिरित्यत आह— **उक्तमिति** । प्राप्तपरिहाराय सत्यपि सामर्थ्ये प्राप्तिस्तु भवत्येव । साऽपि भगवति न सम्भवति, तस्य सार्वज्ञ्येनैष्यत्परिहारसम्भवादिति भावेन सार्वज्ञ्योक्तिः । एवमीश्वरपक्षे विरोधाभावात्, यद्ब्रह्मशब्दस्यामुख्यार्थग्रहणं, अश्रुतत्वादीनां भाक्तत्वकल्पनं, तत्सर्वमपि, परास्तं भवति । तस्माज्जीवप्रापकाणां सावकाशत्वेनासाधकत्वात्, बाधकसद्भावाच्च न जीवः सर्वगतः, किं नाम बाधकाभावात्साधकसद्भावाच्च विष्णुरेवेति प्रागुक्तप्राण आनन्दमयश्च स एवेति सिद्धम् ॥ ८ ॥

चन्द्रिका

॥ श्रीवेदव्यासाय नमः ॥

यैर्लिङ्गैस्साधितः पूर्वं नाम्नां विष्णौ समन्वयः ।
तेषामिहोच्यते लिङ्गजातीयानां समन्वयः ॥

प्रकाशः

टीकायां पादसङ्गत्यनुक्तेस्तामन्यत्रोक्तां दर्शयन् पूर्वपादार्थानुवादपूर्वकमेतत्पादार्थमाह— **यैरिति** । 'तेषां' लिङ्गानां 'इह' द्वितीयपादे समन्वय उच्यत इत्ययुक्तं, समुद्रशायित्वादिलिङ्गानामिह समन्वयानुक्तेरित्यत आह—**लिङ्गेति** । प्रागुक्तलिङ्गजातीयानामित्यर्थः । जातीयत्वं च तल्लिङ्गोपेतवाक्यगततदैकवाक्यगतत्वेनेति ध्येयम् । यद्वा — नामसमन्वयहेतुतयाऽभिमतत्वादिना तल्लिङ्गजातीयत्वम् । एतदुक्तं भवति—सर्वश्रुतिगतान्यन्यत्रप्रसिद्धनामानि सर्वाण्यपि तत्र तत्र स्थितैः सर्वैर्लिङ्गैर्भगवन्निष्ठानीति प्राक्साधिते सति, तत्रासन्दिग्धलिङ्गप्रहाणेनेतरेषां समन्वयोऽत्रोच्यत इति । एतेनैतन्निरस्तं, कथं लिङ्गसमन्वयः, किं लिङ्गान्तरेणोत नाम्ना । नाद्यः, समन्वीयमानत्वेन सन्दिग्धत्वात् । न द्वितीयः, अन्योन्याश्रयापत्तेः, सिद्धे नामसमन्वये तेन लिङ्गसमन्वयः, लिङ्गसमन्वये च सिद्धे तेन नामसमन्वयसिद्धिरिति, असन्दिग्धभगवन्नामलिङ्गादिभिस्सन्दिग्धलिङ्गसमन्वयोक्तेः । एतेन लिङ्गसमन्वयस्य प्रागुक्तनामसमन्वयहेतुत्वेन वा तस्मिन् सत्येवास्योत्थानेन तत्कार्यत्वेन वा हेतुहेतुमद्भावसङ्गति-

चन्द्रिका

तदुक्तमनुव्याख्याने—

> इत्यन्यत्रप्रसिद्धोरुशब्दराशेरशेषतः ।
> ज्ञाते समन्वये विष्णौ लिङ्गैर्ह्येष समन्वयः ॥ १ ॥
> तेषामन्यगतत्वे तु न स्यात्सम्यक् समन्वयः ।
> इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् ॥ इति ॥

## ॥ ओम् सर्वत्र प्रसिद्धोपदेशात् ओम् ॥

प्रकाशः

रित्युक्तं भवति । **तदुक्तमिति** । तृतीयाध्यायतृतीयपादे इत्यर्थः । '**ज्ञाते**' प्रथमपादेनेत्यर्थः । 'लिङ्गैः' इति प्रायिकत्वाभिप्रायेण, ब्रह्मश्रुत्यादिनाऽप्यानन्दमयादेः समन्वयोक्तेः । 'एष समन्वयः' नामसमन्वयः । अन्यत्रप्रसिद्धाशेषलिङ्गानां समन्वयं, "आहोभयगतत्वं च" इत्युत्तरवाक्यगतेन 'आह' इत्यनेन द्वितीयान्तस्यान्वयः ॥

ओम् सर्वत्र प्रसिद्धोपदेशात् ओम् ॥ नन्वत्र टीकायामादित्यश्रुत्या सर्वगतत्वलिङ्गस्यान्यत्र प्रसिद्धिरुक्ता । सा न युक्तेव, तथा हि—अत्र सर्वगतत्वं नाम सर्वहृदयगुहास्थत्वं, यद्वक्ष्यति "सर्वभूताशयस्थितः" इति । तथा च तादृशं "यो वेद निहितं गुहायां" "निहितं गुहासु" "ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः" इत्यादौ विष्णावपि सिद्धमिति प्रक्रमस्थादित्यश्रुतिसमाख्याभ्यां उभयत्र प्रसिद्धिरेव लिङ्गस्य स्यात्, नान्यत्र प्रसिद्धिः, यथा भूमाधिकरणे

चन्द्रिका

यद्यपि पूर्वपादान्त्यस्य उत्तरपादाद्यस्य च अधिकरणस्य नामान्तरसङ्गत्यपेक्षा, तथाऽपि इह तस्यास्सम्भवात् फलस्यावश्यवक्त-

प्रकाशः

"प्राणो वा आशाया भूयान्" इत्युपक्रमस्थप्राणश्रुत्या, "विष्णुर्वाव देवेभ्यो भूयान्" इति समाख्यया च भूमत्वस्य प्राणविष्णूभयसाधारण्यं तद्वदिति चेन्न, वैषम्यात्। तत्र प्रक्रमसमाख्ययोः, प्राणविष्णुपरत्वं पूर्वपक्षिणस्सम्प्रतिपन्नमिति तत्र तथात्वं युज्यते, न त्विह, अत्राभिप्रेतलिङ्गस्य सर्वगतत्वस्य विष्णुनिष्ठतायाः पूर्वपक्षिणः क्वाप्यसम्मतेः। तथा च वक्ष्यत्यध्यायान्ते—"अन्यत्र प्रसिद्धेषु क्वापि ब्रह्मपरत्वं नेति प्राप्ते तन्निरासः" इति। वक्ष्यति चैतद्भूमाधिकरण एव "सर्वभूतगतत्वरूपार्भकौकस्त्वस्य पूर्वपक्षिणा क्वाप्यनङ्गीकारेण" इत्यादि। एवं तर्हि "अन्तर्हृदये ज्योतिः" इत्यादिना गायत्र्यधिकरणविषयवाक्यस्थार्भकौकस्त्वस्याप्याक्षेपः सम्भवतीति चेत्सत्यं, अव्यवहिताक्षेपसम्भवे तस्यैव वाच्यत्वादिति ध्येयमिति। अत्र भाष्यादौ पूर्वाधिकरणेनाक्षेपसङ्गत्युक्त्या तदावश्यकत्वं भाति। तन्न युक्तं, तथात्वे तृतीयाद्यादिस्थानामपि तथा वक्तव्यत्वापत्त्याऽनुक्तेर्न्यूनतापत्तेः। भिन्नपादस्थत्वेन पूर्वसङ्गत्यभावे बाधकाभावाच्चेत्याशङ्क्य समाधत्ते यद्यपीति। 'तस्याः' पूर्वसङ्गतेः। यदत्रोक्तं तन्त्रचूडामणौ—'पूर्वान्त्योत्तराद्ययोर्न सङ्गतिरस्ति, तथात्वे पादविभागभङ्गप्रसङ्गात्' इति, तन्न, प्रमेयभेदेनैव पादभेद-

चन्द्रिका

व्यत्वाच्चेतत्पूर्वपक्षे पूर्वाधिकरणसिद्धान्ताक्षेपो दर्शितो भाष्यादौ। अत्र "सर्वेषु भूतेषु" इत्युक्तं सर्वगतत्वं किमादित्यादेः किं वा विष्णोरिति चिन्ता। तदर्थं "तस्यैतस्यासावादित्यः" इत्यादि पूर्ववाक्यं किमादित्यादिविषयं किं वा ब्रह्मविषयमिति। तदर्थं "एतमेव ब्रह्म" इति ब्रह्मशब्दादयः किं गौणाः किं वा मुख्या इति।

प्रकाशः

सम्भवादिति भावः। एतेन टीकायां 'श्रुत्यादिसङ्गति' इत्युक्तं समर्थितं बोद्धव्यम्। "—"ब्रह्म ततमम्" इति सर्वगतत्वमुक्तम्" इति भाष्यं न सङ्गतिमात्रपरं, किन्तु फलपरमपीति भावेनाह—**फलस्येति**। टीकाऽपि तथा योज्येति भावः। एतच्चाग्रे स्पष्टयिष्यते। विषयसंशयटीकां व्यनक्ति—**अत्रेति**। ऐतरेयके श्रूयते— "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमग्नावध्वर्यवः एतं महाव्रते छन्दोगाः एतमस्यां एतं दिव्येतं वायावेतमाकाशे एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इति। तद्वाक्योक्तं पृथिव्यादिसर्वगतत्वं विषय इत्यर्थः। टीकायां "एतं ह्येव" इत्यादिवाक्योक्तावप्यर्भकौकस्त्वं तत्र न स्पष्टमित्युपसंहारवाक्योक्तिः। आधिकरणविषयोपाधयस्तु "एतद्भावाभिधं लिङ्ग" इत्यादिनाग्रे स्पष्टयिष्यन्ते। **आदित्यादेरिति**। आदिपदेन जीवस्य ग्रहणम्। **पूर्ववाक्यमिति**। 'एतं' इत्येतच्छब्दस्य पूर्वपरामर्शित्वं स्वरसतः प्राप्तमिति भावः। **ब्रह्मशब्दादय इति**।

चन्द्रिका

तदर्थमर्भकौकस्त्वं किं ब्रह्मणि न युक्तमुत युक्तमिति ॥ पूर्वपक्षस्तु—अयं सर्वगत आदित्यः, "तस्यैतस्यासावादित्यो रसः" इत्यादिना प्रकृतस्य आदित्यस्यैव 'एतं" इति परामर्शात् ।

प्रकाशः

"स योऽतोऽश्रुतः इत्युक्ताश्रुतत्वादिकमादिपदार्थः । **अर्भकौकस्त्वमिति** । 'भूतेषु' इति भूतपदोपादानमहिम्ना लब्धमन्यत्रावस्थितत्वे सति भूतमात्रानवस्थितत्वरूपाल्पौकस्त्वं यदि न युक्तं, तदा ब्रह्मशब्दादीनां गौणत्वावश्यम्भावेन तद्विरोधाभावात्पूर्ववाक्यमादित्यविषयमिति । "एतमस्यां" इत्यादावेतच्छब्देन तस्यैव परामर्शादादित्यादेरेव सर्वगतत्वं यदा तु युक्तं, तदा बाधकाभावेन ब्रह्मशब्दादीनां गौणत्वायोगेन तद्विरुद्धं पूर्ववाक्यं नादित्यादिविषयं भवितुमर्हतीति विष्णोरेव सर्वगतत्वमिति फलफलिभावः स्पष्टत्वान्नोक्तः । इयं च चिन्तापरम्परा आदित्यकोटिकपूर्वपक्षानुरोधेनोक्ता । जीवकोटिकपूर्वपक्षानुसारेण तु 'सर्वगतत्वं किं जीवस्योत विष्णोः' इति चिन्तानन्तरं, 'तदर्थे एतमित्येतच्छब्दः किं वक्ष्यमाणपरामर्शक उत न, वक्ष्यमाणपरत्वेऽपि चक्षुर्मयत्वादिकं विष्णोर्न युक्तमुत युक्तमिति, तदर्थे मयट् किं प्रसिद्धचक्षुरादिकरणकत्वार्थ उत तत्स्वामित्वाद्यर्थः' इत्यादिरूपेणोह्येति भावः । आदित्यकोटिकपूर्वपक्षं तावदारभते—**अयमिति** । **प्रकृतस्येति** । प्रकृतश्चादित्य एव—"आदित्यो रसः यश्चासावादित्यः पुरुषं पुरुषं प्रत्यादित्यः" इत्यादित्यश्रुतिबाहुल्यात्, "सूर्य आत्मा जगतः" इति सौरमन्त्रोदाहरणाच्च ।

### चन्द्रिका

ननु लोकतोऽन्यत्रप्रसिद्धस्यापि आदित्यशब्दस्य अन्तरधिकरणन्यायेन विष्णुवाचित्वात् कथं तेन तदन्यस्य प्राप्तिः । न च वाच्यं तत्र देवतावाचिनां समुद्रान्तस्स्थत्वादिलिङ्गात् विष्णुपरतोक्ता, अत्र तु न विष्णुलिङ्गमस्ति, न हि 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दस्तीरपर इति 'गङ्गायां मत्स्यः' इत्यत्रापि तथेति, तत्र प्रवृत्तिनिमित्तस्यानन्याधीनत्वादिना विष्णावेव तेषां मुख्यताया उक्तत्वात् ।

### प्रकाशः

"एतं चन्द्रमसि" इत्युक्त्वा 'एतमादित्ये' इत्यनुक्तत्वलिङ्गाच्च' इति टीकोक्तिरिति भावः । न्यायविवरणटीकायां—"न चैनदन्तस्स्थत्वाधिकरणन्यायेन "उपासात्रैविध्यात्" इति वा परिहृतमिति वाच्यं, सम्भवति हीश्वरे कल्पनैषा । न चासावत्र सम्भवति, "सर्वेषु भूतेषु" इत्यपौरुषत्वश्रवणात्" इत्यादिनाऽऽक्षिप्य समाहितम् । तदयुक्तमिव, तत्रैवात्र लिङ्गाभावात्, आदित्यशब्दस्य प्राक् समन्वयानुक्तेश्च, टीकायां प्रापकबाहुल्योक्तेश्चेत्याशङ्क्य "टीकासु च यदस्पष्टं" इति प्रतिज्ञातत्वात्तद्वाक्यं विवरीतुं पूर्वपक्षाक्षेपप्रकारमाह—**नन्विति** । पूर्वन्यायविषयत्वमाशङ्क्याह—**न च वाच्यमिति** । 'तथेति' इत्यनेनान्वयः । **विष्णुपरतेति** । न तु मुख्यताऽपीत्यर्थः । 'तत्र' अन्तरधिकरणे । आदिपदेनान्यगतं प्रति स्वातन्त्र्येणेति गृह्यते । श्रुतिबहुत्वमुज्जीवकमस्तु, किं लिङ्गेनेत्यतस्तट्टीकोक्तमादित्य-

चन्द्रिका

एतेन "आदित्यो रसः" "यश्चासावादित्यः" "आदित्यो भवति" इत्यादित्यश्रुतेर्बहुत्वात् अन्यप्राप्तिरिति निरस्तम्। विष्णौ मुख्यश्रुतिबाहुल्येन अन्यप्राप्त्ययोगात्। न च तत्र तत्प्रकरणस्थानां सवित्रादिशब्दानामेव विष्णुवाचितोक्ता, न तु तत्पर्यायादित्यादिशब्दानामपीति युक्तम्, तथात्वे तत्प्रकरणेऽदितिशब्दस्याप्यभावेन उत्तराधिकरणटीकायामदितिशब्दस्योक्तन्यायेन सावकाशत्वशङ्कानुपपत्तेः।

देवतान्तरगास्सर्वे शब्दा वृत्तिनिमित्ततः।
विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः॥

इत्यनुव्याख्यानस्थसर्वशब्दविरोधाच्च। तत्रेन्द्रशब्दपर्यायाणामश्रवणेन तत्समन्वयार्थमधिकरणान्तरारम्भापाताच्च।

प्रकाशः

श्रुतिबाहुल्यमपि नान्यप्रापकमित्याह— **एतेनेति**। एतच्छब्दार्थमेवाह — **विष्णाविति**। मन्दानां भ्रमं वारयति— **न चेति**। **टीकायामिति**। "न च श्रुतिर्विष्णुविषया किं न स्यादुक्तन्यायात्" इति वाक्येनेत्यर्थः। **उक्तन्यायेनेति**। अन्तरधिकरणन्यायेनेत्यर्थः। **अनुव्याख्यानेति**। तृतीयाध्यायतृतीयपादीयानुव्याख्यानस्थेत्यर्थः। सर्वे देवतान्तरगताः शब्दाः शब्दवृत्त्योर्योगरूढ्योर्निमित्तानां बहुलप्रयोगादीनां हरौ सत्त्वात् 'अद्धा' वचनवृत्त्यैव वदन्ति, अन्यत्र तत्सङ्गादुपचारतः प्रयोग इत्यर्थः। ननु तत्र सर्वशब्दस्य सङ्कोचः क्रियतामित्यत आह—**तत्रेति**। अन्तरधिकरणोदाहरण इत्यर्थः।

चन्द्रिका

त्रत्र लिङ्गमात्रेण सवित्रादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सिद्धावत्र श्रुतिसहितलिङ्गेनाऽऽदित्यादिशब्दानां विष्णुवाचित्वस्य तत्परत्वस्य वा सुतरां सिद्धेश्च। एतेन "सूर्य आत्मा" इति सौरमन्त्रोदाहरणात्सूर्यप्राप्तिरिति निरस्तम्। उक्तन्यायेन मन्त्रस्थसूर्यशब्दस्यापि विष्णौ मुख्यत्वात्। न च "अन्तः" इत्यादौ चन्द्रादिकतिपयगतत्वादिकमुक्तं, अत्र तु सर्वगतत्वमुच्यत इति भेदः, व्यधिकरणत्वात्। न हि प्रतिपाद्याभेदः शङ्कितः, किन्तु पूर्वपक्षानुदयः। न च "चन्द्रमस्येतं" इति सजातीये चन्द्रादावुक्त्वा आदित्ये अनुक्तत्वाल्लिङ्गात्तत्प्राप्तिः, 'सर्वेषु' इति सर्वशब्देन आदित्यस्यापि ग्रहणसम्भवेन

प्रकाशः

ननु तत्र पर्यायाणामपि निरवकाशविष्णुलिङ्गोपेतानामेव समन्वयो नान्येषामित्याशङ्क्याह—तत्रेति। श्रुतीति। ब्रह्मश्रुतिसहिताश्रुतत्वादिलिङ्गेनेत्यर्थः। टीकोक्तं सौरमन्त्रोदाहरणरूपं प्रापकान्तरमप्याक्षिपति—एतेनेति। आशयमबुध्वा भ्रान्तस्य चोद्यं परिहरति—न चेति। अत्र तु पृथिव्यादिसर्वगतत्वमतो न पौनरुक्त्यं प्रतिपाद्यभेदादिति भावः। किन्त्वति। सर्वस्य विष्णुप्रापकत्वेन आदित्यादिप्रापकाभावेन पूर्वपक्षानुदयश्चोद्यत इत्यर्थः। टीकोक्तं प्रापकान्तरमप्यक्षिपति—न चेति। आदित्यादन्यश्चेत्सर्वगतोऽत्राभिमतस्तदा 'आदित्ये एतं' इत्यपि श्रूयेतेति भावः।

चन्द्रिका

सावकाशलिङ्गेन श्रुत्यादिबाधायोगात् : सन्ति चात्र ' एतमेव ब्रह्म " इति ब्रह्मशब्दाद्याः श्रुतयः, " स योऽतोऽश्रुतोऽगतोऽमतोऽदृष्टः " इत्यश्रुतत्वादिलिङ्गानि च, ब्रह्मशब्दस्य विष्णौ मुख्यतायाः आनन्दमयाधिकरणे सिद्धत्वात् ज्योतिरधिकरणे च ज्योतिषो विष्णुत्वे अश्रुतत्वादेर्हेतूकृतत्वात् , अदृष्टत्वस्य च विष्णुधर्मतायाः " अदृश्यत्वादिगुणकः " इत्यत्र वक्ष्यमाणत्वात्

प्रकाशः

**सावकाशेति** । अनुक्तत्वलिङ्गेनेत्यर्थः । आद्यपदेन " अन्तरपुरुषः " इति पुरुषशब्दादिर्ग्राह्यः श्रुत्यादीनां विष्णौ गतत्वमुपपादयति—**ब्रह्मशब्दस्येति** । **आनन्दमयाधिकरण इति** । प्रागुक्ताशयोऽनुसन्धेयः । पुरुषशब्दस्य च गायत्र्यधिकरणे मुख्यत्वस्योक्तत्वादित्यपि ध्येयम् । लिङ्गानि च वैष्णवानीत्याह—**ज्योतिरधिकरण इति** । " हृदय आहितं यत् " इत्यत्र ज्योतिरग्निर्विष्णुर्वेति विशये, प्रसिद्धेरग्निरिति प्राप्ते, कर्णादिविचरणाभिधानाद्विष्णुरेवेति चरणपदेन कर्णादिविचरणरूपाश्रुतत्वादेर्ज्योतिषो विष्णुत्वे हेतूकरणात् असिद्धस्य तत्त्वायोगात् तत्रैव मुख्यानीत्यर्थः । " अदृश्यत्वादिगुणको धर्मोक्ते " इत्यत्र " यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं " इत्यादावदृश्यत्वादिगुणको विष्णुरन्यो वेति विशये, " अक्षरात्परतःपरः " इति परावधित्वेनोक्ताक्षरशब्देन " यया तदक्षरमधिगम्यते " इति अक्षरसामानाधिकरण्यादन्य इति प्राप्ते, " अथ परा यया तदक्षरं "

चन्द्रिका

" स योऽतोऽश्रुतः " इत्यादिसन्निधाने च " अन्तरपुरुषः " इत्यन्तरत्वश्रवणात्तस्य चान्तर्याम्यधिकरणे विष्णुलिङ्गतायाः सेत्स्यमानत्वात् । न च चक्षुर्मयत्वादिना सर्वजीवानां प्राप्तिः, तस्यापि आनन्दमयाधिकरणन्यायेन प्राचुर्यार्थतया, पादान्त्यप्राणाधिकरणन्यायेन शतसंवत्सरत्वादेरिव अन्तर्यामिविषयतया वा सम्भवात् । पशुशब्दस्य तद्विशेषच्छाग इव, आदित्यश्रुत्या चक्षुर्मयत्वादिजीवलिङ्गानां तद्विशेषादित्ये पर्यवसानेन सर्वजीवप्रापकाभावाच्च ।

प्रकाशः

इति परविद्याविषयत्वोक्तेरदृश्यत्वादिगुणकमक्षरं विष्णुरेवेति वक्ष्यमाणत्वादित्यर्थः । " अन्तर्याम्यधिदैवादिषु " इत्यत्र " यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथवी न वेद " इत्यादौ पृथिव्यादिगतत्वेन श्रुतः किं विष्णुरन्यो वेति संशये, पृथिव्यादिशरीरत्वस्याशरीरे विष्णावयोगादन्य इति प्राप्ते, पृथिव्याद्यविदित्वान्तरत्वादिधर्मोपदेशाद्विष्णुरेवेत्यन्तरत्वस्य विष्णुलिङ्गतायास्साधयिष्यमाणत्वादित्यर्थः । एवमादित्यकोटिकपूर्वपक्षमाक्षिप्य जीवकोटिकमप्याक्षिपति— **न चेति** । परमतदूषणप्रस्तावे सुधायामुक्तं " मनोमयत्वादीनां आनन्दमयाधिकरणन्यायेन सावकाशत्वात् " इति वाक्यं हृदि कृत्वाऽऽह- **प्राचुर्येति** । पूर्वज्ञानत्वरूपार्थतयेत्यर्थः । चक्षुःकरणकसम्बन्धमेव मयडर्थमाश्रित्याह—**पादान्त्येति** । **पशुशब्दस्येति** । षष्ठे " पशुचोदनायामनियमोऽविशेषात् " इत्यन्तिमाधिकरणे " अग्नीषोमीयं

चन्द्रिका

न च अभर्कौकस्त्वलिङ्गादन्यस्य प्राप्तिः, तस्यापि विष्णुधर्मतायाः "अन्तस्तद्धर्मोपदेशात्" इत्यत्र "उपासात्रैविध्य" इत्यत्र च उक्तत्वात्। "हृद्यपेक्षया" इत्यादौ वक्ष्यमाणत्वाच्च।

प्रकाशः

पशुमालभेत" इत्यत्र किं यः कश्चित्पशुरालब्धव्यः उत च्छाग एवेति संशये, "छागस्य वपाया मेदसोऽनुब्रूहि" इति मन्त्रस्य चोदितार्थप्रकाशनार्थतया पारतन्त्र्याद्भिन्नवाक्यतया, "तेजो वै घृतं" इति घृतार्थवादवैलक्षण्याच्च मन्त्रगतच्छागशब्दस्य पशुमात्रे यौगिकत्वेन वा पाक्षिकानुवादत्वेन वोपपत्तेः पशु-शब्दाविशेषकत्वादालम्भनचोदनायाः सामान्यपर्यवसानसम्भवेन यः कश्चित्पशुरिति प्राप्ते, चोदनाप्रतिपन्नस्य सामान्यस्य प्रतिव्यक्ति-समाप्त्या च्छागेप्यवैकल्याद्रूढिप्राबल्येन योगासम्भवान्नित्यमानातस्य पाक्षिकत्वायोगाच्च च्छाग एवालब्धव्य इति सिद्धान्तितम्। अत्र यथा पशुशब्दस्य तद्विशेषे छागे पर्यवसानं, तद्वदित्यर्थः। टीकोक्तं प्रापकान्तरमपि पराचष्टे—न चेति। अन्तरिति। अन्तरस्थत्वस्य "निहितं गुहासु" इति गुहास्थत्वरूपतयाऽर्भ-कौकस्त्वरूपत्वादिति भावः। उपासेति। "सीमानं विदार्यैतया द्वारा प्रापद्यत" इति हृदयस्थत्वोक्तेरिति भावः। एतेन 'उपासा-त्रैविध्यादिति च' इति न्यायविवरणटीकावाक्यमन्यथाऽपि व्याख्यातं ध्येयम्। हृदीति। तृतीयपादे "हृद्यपेक्षया तु मनुष्याधिकारत्वात्"

चन्द्रिका

वक्ष्यमाणसिद्धान्तन्यायाच्छादनेन पूर्वपक्षकरणे च तन्न्यायेनैवैतत्सिद्धान्तफलसिद्ध्या एतस्य वैयर्थ्यात् । "सर्वेषु भूतेषु" इत्यनेन सर्वगतत्वस्यैवोक्ततया अर्भकौकस्त्वाभावाच्च । अन्यथा अत्रोक्तः सर्वगतो न विष्णुश्चेत्, पूर्वोक्तोऽपि सर्वगतो न विष्णुः स्यात् इत्याक्षेपायोगात् । मैवम्,

प्रकाशः

इति गुणसूत्रेण "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" इत्यत्राङ्गुष्ठमात्रपरिमितहृदयावकाशस्थत्वोक्तेरिति भावः । "शब्दादिभ्योऽन्तः प्रतिष्ठानात्" इत्यादिरादिपदार्थः । ननु वक्ष्यमाणाज्ञानेन पूर्वपक्षोऽस्त्वित्यत आह—**वक्ष्यमाणेति** । 'आच्छादनेन' अनाविष्करणेन, तदाविष्कृत्य तद्वैलक्षण्यादिकमनुक्त्वेत्यर्थः । **यद्वा**—'आच्छादने' । अनुपमर्देनेत्यर्थः । अर्भकौकस्त्वमुपेत्य न तत् पूर्वपक्षप्रापकमित्युक्तं, इदानीं तदेव नास्तीत्याह—**सर्वेष्विति** । **अन्यथेति** । भाष्ये "स इदं ब्रह्म ततममपश्यत्" इति पूर्वोक्तसर्वगतत्वमन्यस्येत्याक्षिप्तम् । तन्न स्यात, अर्भकौकस्त्वस्यान्यगतत्वे प्रागुक्तसर्वगतत्वस्य विष्णुधर्मत्वाविरोधादित्यर्थः । एवमुक्तरीत्या आदित्यश्रुतेस्सावकाशत्वेऽपि "ज्योतिः" इत्यत्र निरवकाशप्रकरणेन ज्योतिश्श्रुतेरिव निरवकाशादित्यलिङ्गवशेनादित्यश्रुतेर्निरवकाशत्वेन वा, पूर्वं विष्णौ समन्वयेऽपि मुख्यत्वस्यानुक्त्या सावकाशत्वस्यैवाभावेन स्वतो निरवकाशत्वेन वा, तन्न्यायाविषयत्वेन तत्रास्यां समन्वयस्यैवाभावेन वा त्रेधा श्रुतेर्निरवकाशत्वेन तया

चन्द्रिका

" संवत्सर एव प्रध्वंसयन् तस्यैतस्यासावादित्यो रसः " इति संवत्सराधिपतित्वरूपसंवत्सरसारत्वलिङ्गात्, " यश्चासावादित्यः " इति प्रसिद्धार्थयच्छब्दोपबन्धात्, " तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति " इति सर्वपुरुषाभिमुख्यलिङ्गाच्चादित्यशब्दस्य प्रसिद्धादित्यपरत्वात् । अत एव भाष्यटीकयोरादित्यशब्दस्य प्रसिद्धपरत्वं लिङ्गाधीनमिति

प्रकाशः

पूर्वपक्षोदयो युज्यत इति भावेनाह— संवत्सर एवेति । " महापुरुष इति यमवोचाम, संवत्सर एव प्रध्वंसयन्नन्यानि भूतानि ऐक्याभावयन्नन्यानि तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तं—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ "

इत्यत्र 'तस्यैतस्य' इति संवत्सरं परामृश्य रसपदेन तदधिष्ठातृत्वोक्तेस्तस्य च रथवेगेन संवत्सरवर्तरि सूर्य एव प्रसिद्धेः, यच्छब्दस्य प्रसिद्धार्थकत्वात्सूर्यस्यैवादित्यत्वेन लोकप्रसिद्धत्वात्, सर्वपुरुषाभिमुख्यस्य सूर्य एव प्रत्यक्षत्वेन विष्णावदर्शनाल्लिङ्गत्रयेण श्रुतेरुज्जीवनादित्यर्थः । एतेन लिङ्गबाहुल्यकथनेन " बहुलिङ्गसहितश्रुतेरपि सावकाशायाः निरवकाशश्रुत्यादीनामेव बलवत्त्वं " इति न्यायविवरणगतबहुशब्दार्थो विवृतः । अत एवेति । लिङ्गैःश्र-

चन्द्रिका

दर्शयितुं "तस्यैतस्यासावादित्यो रसः" इत्यादिलिङ्गप्रतिपादकांशोऽप्युपात्तः। उक्तं ह्यनुव्याख्याने—

पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम्।

इति। न चैवं सत्यावश्यकत्वाल्लिङ्गैरेव पूर्वपक्षः, लिङ्गसाहचर्यादेव च सर्वगतत्वस्यान्यत्रप्रसिद्धत्वं चोच्यताम्, किं तदुपजीविश्रुत्युपन्यासेनेति वाच्यम्, उक्तलिङ्गानामादित्यविशेषणतयैव प्रतीत्य सर्वगतविशेषणत्वाप्रतीतेः साक्षात्तैः पूर्वपक्षाद्यसम्भवात्। तदेतदभिप्रेत्योक्तं न्यायविवरणे—"बहवो ह्यत्रादित्यशब्दाः क्षित्यादिषूक्त्वाऽऽदित्येऽनुक्तिरित्यादिलिङ्गं च" इति।

प्रकाशः

त्युज्जीवनस्याभिप्रेतत्वादेवेत्यर्थः। अन्यथा श्रुतिबाहुल्यमात्रप्रदर्शनपरत्वे "असावादित्यः" इत्येतावदेवोदाह्रियेतेत्यर्थः। **उक्तं हीति**। आनन्दमयाधिकरणे। 'तत्र' पूर्वाधिकरणव्युत्पादितन्यायविषयेऽप्यर्थे यदधिकरणान्तरमारभ्यते, तत्पूर्वन्यायाच्छादकाधिकाशङ्कालक्षणात्पुनरधिकरणान्तरारम्भप्रापकाद्धेतोर्युक्त इत्यर्थः। ननु टीकारीत्या सर्वगतत्वस्यान्यत्र प्रसिद्धये श्रुत्यनुसरणमित्यत आह—**लिङ्गेति**। **तदेतदिति**। लिङ्गैः श्रुतिमुज्जीव्य तया पूर्वपक्ष इत्येतदित्यर्थः। एतेन भाष्यन्यायविवरणयोरेकविषयत्वं विवृतम्, "आदित्यो भवितुमर्हति, तदीयश्रुतिलिङ्गानामत्र दर्शनात्" इति न्यायविवरणटीका च विवृता। यद्यप्यत्र आदित्यशब्द एक एव, तथाऽप्यावृत्तिबहुत्वाद्वाऽऽदित्यप्रतिपादकादित्यसूर्यमित्रादिशब्दान

चन्द्रिका

यद्वा अन्तराद्यधिकरणेष्विन्द्रादिशब्दानां तैस्तैर्लिङ्गैर्विष्णुपरतैव व्युत्पादिता, न तु तत्र मुख्यता ।

प्रकाशः

सत्त्वाद्वा 'बहवः' इत्युक्तम् । यद्यप्यत्र 'शब्दाः' इत्यन्तमेवोदाहार्यं, शिष्टं तु पूर्वपक्षे प्रापकान्तरत्वादुदाहृतम् । आदिपदेन चक्षुर्मयत्वादिकं जीवलिङ्गं ग्राह्यम् । यद्वा- आदिपदेन संवत्सरसारत्वादिप्रागुक्तलिङ्गग्रहः । तेन तदंशोऽपि प्रकृतोपयोग्येवेति भावः । न्यायविवरणे लिङ्गेन श्रुत्युज्जीवनं न स्पष्टं, प्रत्युत श्रुतीनामेव लिङ्गसमकक्षतया प्राबल्यं प्रतीयते । अतस्तत्स्वारस्यानुरोधेन भाष्यादौ लिङ्गांशोक्तेर्भावं विवक्षुः पक्षद्वयमाह—**यद्वेत्यादिना** । **विष्णुपरतैवेति** । तस्या अपि समन्वयरूपत्वात् । इह तु तत्परत्वं नास्ति तल्लिङ्गाभावादिति भावः । नन्वेवमानन्दमयाधिकरणान्ते,

अतो नारायणो देवो निश्शेषगुणवाचकैः ।
गुणिसामान्यवचनैरपि मुख्यतयोदितः ॥
अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः ।
अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ॥

इत्युपक्रम्य,

शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ।
अन्यार्थेष्वल्पता हेतोस्तन्निमित्तत्वतस्तथा ।

इत्यादिना भगवति विद्वद्रूढिमहायोगावभिधाय, "तस्मात्" इति

चन्द्रिका

तस्मान्मुख्यार्थता विष्णोरिति कृत्वा हृदि प्रभुः ।
समन्वयं साधयति.... ....................... ॥

इत्यनुव्याख्याने मुख्यत्वोक्तिः, आकाशादिपदप्रवृत्तिनिमित्तस्य भगवदधीनत्वोक्तिश्च, स्थितायां त्रिपाद्यां प्रवृत्ते "तदधीनत्वात्" इत्यत्र सर्वशब्दानां भगवति मुख्यताया वक्ष्यमाणत्वात्तदभिप्राया । अत एव

प्रकाशः

श्लोके 'तस्मात्' महायोगविद्वद्रूढिसत्त्वात्सर्वशब्दमुख्यार्थता विष्णोरुपपन्नेति 'मुख्यत्वे तेस्तन्निमित्तत्वतः' इत्यादिनाऽन्यगतप्रवृत्तिनिमित्तस्य भगवदधीनत्वोक्तेश्च, ईक्षत्यधिकरणे वक्ष्यमाणसमन्वयोपयोगितया वाच्यत्वोक्तेश्च टीकायां "तस्मादशेषाधिदैवगतशब्दवाच्यो हरिः" इत्यादिना सर्वत्र तत्तच्छब्दवाच्यत्वोपसंहारात्तद्विरोध इत्यतः, सर्वस्य गतिमाह—**तस्मादिति** । **उक्तिश्चेति** । 'अनुव्याख्याने' इत्यन्वेति । 'तदभिप्राया' इत्यन्वयः । पादत्रये नानावाक्यगतभगवल्लिङ्गैस्तत्तद्वाक्यगताधिदैविकादिसर्वशब्दानां भगवत्परत्वे' सर्वस्य तदधीनत्वे च निर्णीते सति, किं तेषां तत्परत्वं ऐन्द्र्या गार्हपत्यपरत्वस्येवामुख्यवृत्त्योत मुख्यवृत्त्येति, तथा त्रिपाद्यां तत्तच्छब्दप्रवृत्तिहेतोरीशाधीनत्वोक्तेः किं फलमिति च शङ्कायाः पादत्रयानन्तरमेवोदयात्तच्छङ्कानिवृत्त्यर्थं त्रितयानन्तरं प्रवृत्ते "तदधीनत्वात्" इत्यव्यक्तनयगुणसूत्रे स्वातन्त्र्यस्य शब्दवृत्तौ मुख्यनिमित्तत्वात्सर्वस्वतन्त्रे भगवति अव्यक्तादिशब्दोपलक्षितसर्वशब्दमुख्यवृत्तिरिति वक्ष्यमाण-

चन्द्रिका

'हृदि कृत्वा' इत्युक्तम्। ईक्षत्यधिकरणे वाच्यत्वोक्तिरपि तदुपयोगितया। टीकायां प्रत्यधिकरणं तत्तच्छब्दवाच्यत्वोक्तिरपि तदभिप्राया। तत्तच्छब्दप्रवृत्तिनिमित्तगुणलाभस्य वक्ष्यमाणसापेक्षत्वेऽपि तत्तत्प्रकरणस्थगुणमात्रलाभः, पूर्वाधिकरणाक्षेपः, समाधानं च तत्तदधिकरणमात्रसाध्यम्। एवं चादित्यादिशब्दानां विष्णौ मुख्यताया अनुक्तत्वात्तैः पूर्वपक्षोदय इति न्यायविवरणाभिप्रायः।

प्रकाशः

त्वात्तदभिप्रायेणात्र मुख्यत्वाद्युक्तित्यर्थः। तदुपयोगितया' वक्ष्यमाणमुख्यत्वोपयोगितया। अन्यथा ब्रह्मण एव वाच्यत्वे शब्दानां तत्र मुख्यत्वोक्तिरसङ्गता स्यादिति भावः। ननु शब्दप्रवृत्तिनिमित्तस्य गुणस्याव्यक्तनयेनैव लब्धत्वात्किं पूर्वतनैरधिकरणैरित्यत आह— **तत्तच्छब्दप्रवृत्तीति**। अवयवशक्तिलभ्यपरमैश्वर्यादिमस्वरूपगुणलाभस्येत्यर्थः। ननु तत्र त्रिपाद्यां सिद्धं स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तं भवति नवेति विशये, नेति प्राप्ते, भवतीति सिद्धान्तयिष्यते, न तु तत्तच्छब्दप्रवृत्तिनिमित्तमपि भगवद्गतमिति। तथा च कथमेवमुक्तिरिति चेत्सत्यं, "सूक्ष्मं तु तदर्हत्वात्" इत्यनेनोपलक्षणतयाऽशेषशब्दप्रवृत्तिहेतूनामपि ईशगतत्वव्युत्पादनमस्तीत्याशयात्। **यद्वा**—'तत्तच्छब्दप्रवृत्तिनिमित्तगुणलाभस्य' इत्यस्य स्वातन्त्र्यरूपगुणलाभस्येत्येवार्थः। स्वातन्त्र्यमपि "तदधीनत्वात्" इत्यत्रैव वक्ष्यतीति भावः। नन्वेवं भाष्यादौ "तस्यै-

चन्द्रिका

अत एवात्र टीकादावादित्यशब्दस्य न विष्णुपरता, तल्लिङ्गाभावात्, प्रत्युत आदित्यलिङ्गसद्भावादिति दर्शयितुं तल्लिङ्गप्रतिपादकांशोऽप्युपात्तः। एवं चोत्तरत्रापि आदित्यादिशब्दैः पूर्वत्रापि प्राणादिशब्दैः पूर्वपक्षोदयस्सुलभः। अन्यथा अन्यश्रुतीनामन्यलिङ्गानां च तदधीनत्वन्यायेन ब्रह्मणि मुख्यत्वस्य सिद्धत्वेनान्यश्रुत्याद्याश्रयणेन पूर्वपक्षः क्वापि नोदीयात्। यद्वा "अन्तः" इत्यत्रेन्द्रादिशब्दानां विष्णौ मुख्यत्वोक्तिरस्तु, तथाऽप्यादित्यशब्दो नान्तराधिकरणविषयवाक्ये श्रुतः, नापि तन्न्यायविषयः, अत्रैव तत्र निरवकाशलिङ्गाभावात्। अत एव टीकादौ तदविषयतां दर्शयितुं देवतालिङ्गप्रतिपादकांशोऽप्युदाहृतः। पर्यायाणामपि तदधिकरणन्यायविषयाणामेव तेन समन्वयसिद्धिः, न तु तदविषयाणाम्। उत्तराधिकरणटीकाऽयदितिसजातीयेन्द्रादिशब्दसमन्वयस्योक्तत्वाभिप्राया। अनुव्याख्याने सर्वशब्दोऽपि न्यायविषयसर्वपरः।

प्रकाशः

तस्यासौ" इति लिङ्गभागोक्तिः किमर्थेत्यतः तदाशयमाह—**अत एवेति**। तन्न्यायाविषयत्वमेवाह—**अत्रैवेति**। नन्वेवमुत्तराधिकरणटीकायामदितिश्रुतेः सावकाशत्वोक्तिरयुक्ता, तस्या अपि तद्विषय वाक्ये अश्रुतत्वात्। तन्न्यायाविषयत्वाच्च। अत एव 'अदितित्वलिङ्गात्' इति वक्ष्यतीत्यत आह—**उत्तरेति**। नन्वेवं "देवतान्तरंगाः सर्वे" इत्युक्तिविरोध इत्यत आह—**अनुव्याख्यान इति**।

चन्द्रिका

तत्राधिदैविकत्वाद्युपाध्युक्तिरपि अधिकरणान्तरविषयाधिभौतिकादिव्यावृत्त्यर्था, न तु सर्वाधिदैविकसङ्ग्रहार्था। तस्माद्युक्तः पूर्वपक्षः। न चैवं यत्सम्बन्धात्सर्वगतत्वस्यान्यत्रप्रसिद्धता, तन्नामसमन्वय एवोच्यतामिति वाच्यम् , अन्तर्यामित्वादेर्लिङ्गस्य पृथिवीशरीरत्वादिदिलिङ्गसबन्धादेव अन्यत्रप्रसिद्धत्वात्तत्समन्वयार्थं पादान्तरे कार्ये, तत्सङ्गत्यर्थमत्रापि लिङ्गस्यैव समन्वेतव्यत्वात् ।

प्रकाशः

नन्वेवं सङ्कोचे "देवतान्तरगाः" इत्यधिदैविकशब्दत्वं "अध्यात्मगैश्च प्राणाद्यैः" इत्यध्यात्मशब्दत्वमित्याद्युपाध्युक्तिरयुक्ता, सर्वसङ्ग्रहार्थत्वात्तस्य इत्यत आह—तत्रेति। ननूक्तरीत्या आदित्यश्रुतेर्निरवकाशत्वे तस्या एव समन्वय उच्यतां, तस्यास्स्वत एवान्यत्रप्रसिद्धत्वात् , किं तत्साहित्येन अन्यत्रप्रसिद्धलिङ्गसमन्वयेन। न चाऽऽद्यपक्षे श्रुतेरप्यन्यसाहित्येनैव अन्यत्र प्रसिद्धिर्न तु स्वत इति वाच्यं, उत्तरपक्षद्वये तदभावात् । आद्येऽपि श्रुतेर्लिङ्गसाहित्येनैवान्यत्रप्रसिद्धता, सर्वगतत्वस्य तु आदित्यश्रुतिसाहित्येनापीति विलम्बितत्वमिति भावेनाऽऽशङ्क्य निरस्यति— न चैवमिति। किं सर्वत्रैवं सम्भवेन लिङ्गसमन्वयार्थं पादान्तरमेव मास्त्विति सदाशयः, उत पादान्तरारम्भेऽप्यस्योक्तरीत्याश्रयणेन पूर्वत्रैव निवेशः स्यादिति। आद्य आह—अन्तर्यामित्वेति। अत्रापीति। ननु वैश्वानराधिकरणस्येव फलतः सा भविष्यति। न च पाचकत्वाद्यनेकलिङ्गसमन्वयार्थमेकनामसमन्वयस्तत्रोच्यत इति वाच्यं, इहापि संवत्सरसारत्वाद्यनेकलिङ्गसमन्वयार्थत्वसम्भवादिति चेत् ,

चन्द्रिका

न च यत्र लिङ्गं नामसम्बन्धादन्यत्रप्रसिद्धम् , तदधिकरणं नामसमन्वयपरं आद्यपादस्थं चास्त्विति वाच्यम् , तथात्वे आदित्यादिशब्दप्रवृत्तिनिमित्तगुणस्यन्तरधिकरणेनैव लब्धतया साक्षादपूर्वगुणालाभात् । अर्भकौकस्त्वादिपूर्वपक्षमूलयुक्तेः प्रसिद्धोपदेशादिसिद्धान्तयुक्तेश्च सर्वगतवाक्य इव आदित्यवाक्येऽसत्त्वाच्च । नामपादे नामसमन्वये हेतुतयोक्तलिङ्गसमन्वयस्यैव इह आकाङ्क्षितत्वाच्च । तस्मादादित्यश्रुतितः सूर्यप्राप्तिर्युक्ता । सौरमन्त्रोदाहरणाच्च तत्प्राप्तिः, मन्त्रे " चक्षुर्मित्रस्य " इति चक्षुष्ट्वस्य श्रवणात्तस्य च

प्रकाशः

सत्यं, साक्षात्सङ्गतिसम्भवे फलतस्तदुक्त्ययोगात् , नामसमन्वयस्य वक्ष्यमाणदोषग्रस्तत्वाच्चेति तात्पर्यात् । द्वितीयमाशङ्क्य निराह— **न चेति । अन्तरिति** । तत्र सर्वदेवतावाचिपदप्रवृत्तिनिमित्तस्येशगतत्वस्यान्यगतस्य भगवदधीनत्वस्य च साधनादिति भावः । एतच्चाऽऽद्यपक्षानुरोधेनोक्तमिति ध्येयम् । अग्रिमपक्षद्वये आदित्यादिशब्दप्रवृत्तिनिमित्तगुणलाभस्य " अन्तः " इत्यत्राभावाद्युक्त्यन्तरमाह— **अर्भकौकस्त्वादीति । हेतुतयोक्तेति** । उक्तलिङ्गजातीयेत्यर्थः । आक्षिप्तं पूर्वोक्तं प्रापकान्तरं च साधयति—**सौरेति** । न च सूर्यादिशब्दः सावकाश इत्युक्तमिति वाच्यं, चक्षुष्ट्वलिङ्गेन तदुज्जीवनादित्याह—**मन्त्रइति** । " आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् " इति तस्यामेव श्रुतौ चक्षुष्ट्वोक्तेरित्यर्थः । प्रागाक्षिप्तं टीकोक्तं

चन्द्रिका

"आदित्यश्चक्षुर्भूत्वा' इत्यादित्यश्रुत्याऽऽदित्यलिङ्गत्वात् । उक्तादित्यश्रुत्युपोद्बलिताद्विशिष्याऽऽदित्येऽनुक्तत्वलिङ्गाच्च तत्प्राप्तिः । चक्षुर्मयत्वादिलिङ्गाच्च सर्वजीवानां प्राप्तिः, आनन्दमयोक्तस्य "को ह्येवान्यात्" इति

प्रकाशः

प्रापकान्तरमपि समर्थयते—**उक्तेति** । यद्यपि "सर्वेषु भूतेषु" इति सामान्येन भूतपदेनाऽऽदित्यस्यापि ग्रहणात्तद्गतत्वोक्तिरस्ति, तथाऽपि "चन्द्रमस्येतं" इतिवत् "आदित्य एतं" इति विशिष्यानुक्तत्वलिङ्गात्तत्प्राप्तिः । अन्यथा तथोक्तिः स्यादेव, अनुक्तौ कारणाभावादित्यर्थः । अत एव टीकायां "—'एतमादित्ये' इत्युक्तिस्स्यात्" इत्युक्तम् । एवमादित्यकोटिकपूर्वपक्षं टीकोक्तं समर्थ्येदानीं न्यायविवरणगताऽऽदिपदोपात्तजीवलिङ्गेन "सर्वजीवानां चैतत्सर्वगतत्वं" इति टीकोक्तजीवकोटिकपूर्वपक्षं च समर्थयते—**चक्षुर्मयत्वादीति** । "चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा" इति वाक्ये श्रुतानि टीकोक्तान्यादिपदार्थः । ननूक्तमत्र मयटः प्राचुर्यार्थत्वेन पूर्णज्ञानत्वादिना तदुपपत्तेरित्यतः तद्वैषम्यमाह—**आनन्दमयेति** । यदेष आकाशनामा विष्णुः पूर्णानन्दो न स्यात्, तर्ह्ययं न जगच्चेष्टयेत्, प्रवृत्तिहेतूनां चतुर्णां मध्ये दुःखोद्रेकरागद्वेषशून्यस्य सुखोद्रेकैकनिबन्धनत्वात्प्रवृत्तेः । यद्ययं न चेष्टयेत्तर्हि चेष्टयेन्न कोऽपीति पूर्णानन्दत्वसाधकजगच्चेष्टकस्वरूपहेतुव्यपदेशस्य भावेन तत्र प्राचुर्यार्थत्वेऽपीह तदभावेन तन्न्यायाविषयत्वादित्यर्थः । अत

चन्द्रिका

प्राचुर्यार्थे हेतुव्यपदेशस्य तत्प्रायपाठस्य च अत्राभावेन तन्न्याया-विषयत्वात् । ज्ञानकरणतया प्रसिद्धचक्षुरादिसम्बन्धस्यैव नित्यज्ञानेऽन्तर्यामिण्य-सम्भवेन तत्प्राचुर्यस्य सुतरामसम्भवाच्च । चक्षुश्शब्दस्य विष्णुपरत्वे च मयटो वैयर्थ्यम् ।

प्रकाशः

एवं "हेतुव्यपदेशात्" इति सूत्रं प्राचुर्यार्थत्वेऽपि योजितमिति भावः । नन्वानन्दमये हेतुव्यपदेशोऽपि विज्ञानमयमनोमयादौ तद-भावेऽपि प्राचुर्यार्थत्वं स्वीकृतमित्यत आह—तत्प्रायेति । आनन्द-मयप्रायपाठस्यैवेत्यर्थः । जीवेऽपि विकारार्थत्वायोगादकामेनाप्युपेयं प्राचुर्यार्थत्वमित्यत आह—ज्ञानेति । यद्वा—प्राचुर्यार्थत्वेऽप्यनुप-पत्तिमाह—ज्ञानेति । ज्ञानकरणत्वेन प्रसिद्धं यच्चक्षुरादि तत्संबन्धस्यैवा-सम्भवेन तद्बाहुल्यरूपप्राचुर्यस्य सुतरामयोगादित्यर्थः । प्रसिद्धपदेन चक्षुःपदस्याप्रसिद्धार्थस्वीकारे प्रसिद्धिबाध इति सूचितम् । "ज्योति-राद्यधिष्ठानं तु तदामननात्" इत्यत्र द्वितीये चक्षुरादिकरणानामीश्वर-प्रयोज्यत्वेन तदीयत्वमुच्यते, न तु जीवस्यैव ज्ञानजनकतया तत्सम्बन्ध इति भावेनोक्तं—सम्बन्धस्यैवेति । तत्र हेतुः—नित्य-ज्ञाने इति । एतेनान्तर्यामिविषयतयोपपन्नमिति प्रत्युक्तं, तस्यापि नित्यज्ञानत्वादिति । ननु न ज्ञानकरणमिह चक्षुः, किन्तु "चक्षुषश्चक्षुः" इत्यादाविव विष्णुरेवेत्यत आह—चक्षुश्शब्दस्येति । ननु सुधायां "चक्षुर्मयत्वादेस्सावकाशत्वमाशङ्क्य हेत्वन्तरेण पूर्वपक्षे सत्यभ्युच्चय-

चन्द्रिका

न स्यात् । पृथिव्याद्यभिमानिनां जीवानां वैतदन्तर्यामित्वं, तान्प्रति पृथिव्यादेः स्थूलशरीरत्वात् । अत्र भामत्यां "यस्सर्वान् लोकानन्तरो यमयति" इति श्रुतस्य सर्वनियन्तृत्वस्याभिमानि जीवेषु प्रत्येकमसम्भवात् नैवं पूर्वपक्ष इत्युक्तम् । तन्न, स्वाङ्गीकृतजीवमात्रपक्षेऽपि तदसम्भवात् । 'यः' इत्याद्येकवचनस्य समुदायपरत्वं त्वभिमानिपक्षेऽपि समम् । प्रत्युत जीवमात्रपक्ष एव

प्रकाशः

सूत्रसूचितं द्वितीयं पक्षं विवृण्वन्नाह—**पृथिव्यादीति** । भाष्य-सूत्रानुरोधेन टीकायामेकवचनोक्तावपि तज्जात्यभिप्रायमिति भावेन बहुवचनोक्तिः । अन्यथा भामतीमतरीत्या टीकायामपि जीवसामान्य-मेवाभिमतमिति मन्दस्य शङ्का स्यात् । जीवसामान्यपक्षश्चाग्रेतन-दोषदुष्टः । अत एव टीकायामुत्तरत्र "प्रकृत्यादिलिङ्गेन तेषामन्त-र्यामित्वं" इति "अतोऽन्तर्यामी न विष्णुः, अपि तु प्रकृत्यादयः" इति च बहुवचनोक्तिः । अन्यथा 'तस्य' इति 'प्रकृत्यादिः' इत्येव च निर्देशः स्यादिति भावः । अत्र परोक्तं बाधकमाशङ्क्याह—**अत्रेति** । **नैवमिति** । किन्तु जीवसामान्य-मित्यर्थः । **तदिति** । सर्वलोकनियन्तृत्वस्य प्रत्येकं जीवे असम्भवा-दित्यर्थः । न प्रत्येकं जीवानां तन्नियन्तृत्वं, किन्तु मिलि-तानां, "यस्सर्वान् लोकान्" इत्येकवचनं समुदायाशयमित्यत आह—**य इति** । अभिमानिनामप्युक्तरीत्या तत्तल्लोकनियामक-त्वेन मिलित्वा सर्वलोकनियन्तृत्वोपपत्तेरित्यर्थः । **प्रत्युतेति** । प्राण-

चन्द्रिका

युक्तः, "यस्य पृथिवी शरीरं" इत्यादिनोक्तस्य पृथिव्याद्येकैक-शरीरत्वस्य, "यस्य प्राणः शरीरं" इत्यादिनोक्तस्य प्राणवाक्चक्षुश्श्रोत्रादिशरीरत्वस्य चायोगात्। तस्मादभिमानिनामेवान्तर्यामित्वं न तु विष्णोः, तस्य पृथिव्याद्यात्मकत्वतद्देहत्वयोरयोगात्। न च तेन शीर्यमाणत्वादिना पृथिव्यादेस्तच्छरीरत्व, योगाद्रूढेर्बलीयस्त्वात्। "यं पृथिवी न वेद" इत्युक्तं पृथिव्यादिनाऽविदितत्वं च तस्य जडत्वादभिमानिन्यपि युक्तम्। "यं आत्मा न वेद" इति चेतनस्य पृथगुक्तेः पृथिव्यादिशब्दो नाभिमानिचेत-

प्रकाशः

चक्षुरादीन्द्रियपृथिव्यादिभूतसङ्घातशरीरकत्वात जीवस्य पृथिव्यादिमात्र-शरीरकत्वमयुक्तं, अभिमानिनां तु तत्तन्मात्रनियामकत्वेन तत्तन्मात्रस्थूलशरीरकत्वं युक्तमिति भावः। "विद्यमानेऽपि विष्णुलिङ्गे न तस्यान्तर्यामित्वम्" इत्यादिटीकार्थमाह— **न तु विष्णोरित्यादिना**। "पृथिव्यादिशरीरकत्वस्य कयाऽपि विधया अवकाशाभावात्" इति टीकायाम् विधाशब्दस्य 'पृथिवीभिश्चिच्छरीरत्वे-रीकारेण" इति वाक्यानुरोधेन तदात्मकत्वतद्देहत्वरूपप्रकारद्वय-मर्थं विवृत्य योगवृत्त्याऽपीत्यपेरर्थमभिप्रेत्य योगवृत्त्या विष्णौ घटनमाशङ्क्य निराह— **न च तेनेति**। **बलीयस्त्वादिति**। तस्य जन्मादिनयपूर्वपक्ष एव व्युत्पादितत्वादिति भावः। रूढित्यागे बाधकमाशङ्क्याह—**यमिति**। 'तस्य' पृथिव्यादेः। जडत्वे युक्तिमाह— **यमिति**।

चन्द्रिका

नपरः । "यः पृथिव्या अन्तरः" इत्युक्तमन्तरत्वं यदि भिन्नत्वं, यदि वाऽन्तस्स्थत्वं, द्वयमपि पृथिव्यादिशरीरकेऽभिमानिन्यपि युक्तम् । "य आत्मनि तिष्ठन् आत्मानं यमयति" इत्येतदपि तत्त्वाभिमानिनां अस्मदाद्यात्मनियामकत्वात् युक्तम् । "यमात्मा न वेद" इति तु अभिमानिजीवानां दुर्ज्ञानत्वात् युक्तम् । यद्वा— "यः पृथिव्या" इत्यादाविव "य आत्मनि" इत्यत्रापि आ-

प्रकाशः

माध्यन्दिनपाठानुरोधेन 'आत्मा' इत्युक्तम् । "यं विज्ञानं न वेद" इति काण्वपाठस्यैवोक्तौ विज्ञानशब्दस्य आत्मशब्दस्येव जीवे प्रसिद्ध्यभावेन चेतनाज्ञेयत्वं न स्पष्टं भायादिति भावः । नन्वथापि- "अन्तरपुरुषः" इत्यत्र निर्णीतान्तरत्वं वा, "आत्मनि तिष्ठन्" इत्यादिनोक्तं चेतननिष्ठत्वं वा, चेतननियमनं वा, आत्मशब्दितचेतनाविदितत्वं वा रूढौ बाधकमस्तीत्यतः क्रमेण निराह—**य इत्यादिना** । पूर्वमात्मशब्दस्य जीवसामान्यपरत्वं, तद्वाक्यस्थ 'यः' इत्यादियच्छब्दस्य पृथिव्यादितत्त्वाभिमानिजीवसमुदायपरत्वमुपेत्य तल्लिङ्गं सावकाशमित्युक्तम् । इदानीमात्मशब्दः सकलचेतनपर एव, 'यः' इत्यादियच्छब्दस्तु सकलात्माभिमानिचेतनपरः, पूर्वत्र पृथिव्यादिशब्दैस्तदभिमानिजीवस्यैव ग्रहणेनात्रापि तत्प्रायपाठेन तथैव ग्राह्यत्वात् । आत्माज्ञेयत्वादि च आत्माभिमानिनो जीवस्य दुर्ज्ञेयत्वादिना युक्तमिति भावेनाह—**यद्वेति** । एवञ्चान्तर्यामिणोऽन्यत्वादमृत-

चन्द्रिका

त्माभिमानिजीव एवात्मान्तर्यामित्वेनोच्यत इति ॥

सिद्धान्तस्तु

पृथिव्यादेर्जडत्वे स्यादप्रसक्तनिराक्रिया ।
चित्त्वे तु तेन कार्त्स्न्येनावेद्यत्वं नेश्वरं विना ॥

"यं पृथिवी न वेद" इत्यादौ पृथिव्यादेर्जडत्वे 'यं' इत्यस्य वैयर्थ्यं, "यमात्मा न वेद" इत्यस्यानुपपत्तिश्च । अप्रसक्तप्रतिषेधापा-

प्रकाशः

त्वस्यापि तस्यैव वाच्यत्वात् प्रागुक्तहेतुना नाक्षिस्थो विष्णुरिति भावः ॥

अधिदैवाधिभूताध्यात्मप्रकरणेषु पृथिव्याद्यविदितत्वतदन्तःस्वरूपनिरवकाशलिङ्गसत्त्वेन तद्बलेन पृथिव्यादिशरीरत्वस्य कथं चिन्त्यत्वात् अन्तर्यामी विष्णुरिति भावेन "अन्तर्यामी विष्णुरेव" इत्यादिटीका। विष्ण्वन्नविदितत्वस्य निरवकाशत्वं तावदाह-**पृथिव्यादेरिति** । यदुक्तं पृथिव्यादेर्जडत्वेन तदवेद्यत्वं प्रकृत्यादौ युक्तमिति, तत्र बाधकत्रयं वदन् पूर्वार्धं व्यनक्ति—**यमिति** । जडे ज्ञानमात्रस्यैवाभावेन 'न वेद' इत्येव वाच्यं, न तु 'यं' इति विषयविशेषोपादानमित्यर्थः । **यमात्मेति** । पृथिव्यादौ ज्ञानमात्रनिषेधे "यमात्मा" इत्यादावपि तथात्वापत्त्या चेतनस्य ज्ञानसामान्यनिषेधायोग इत्यर्थः । श्लोके 'अप्रसक्त' इत्युक्तिरुपलक्षणमिति भावः । **अप्रसक्तेति** । जडे ज्ञानप्रसक्तेरेवाभावादिति भावः ।

चन्द्रिका

तश्च । "नान्तरिक्षे न दिवि" इत्यन्तरिक्षादावप्रसक्तचयननिषेधस्तु "हिरण्यं निधाय चेतव्यम्" इति विधिस्तुत्यर्थः । प्रकृते तु न तथा । तस्मात्पृथिव्यादिः तदभिमानिचेतन एव । तेन च साकल्येनावेद्यत्वं भाष्योक्तश्रुत्यादिभिर्हरेरेव ।

प्रकाशः

ननु 'पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि हिरण्यं निधाय चेतव्यम्" इत्यत्रेष्टकावेदिकारूपाग्निचयनस्य "नान्तरिक्षे" इत्यत्राप्रसक्तविषयत्वेऽपि यथा नित्यानुवादत्वं तद्वत्स्यादित्यत आह— **नेति** । आद्यस्य द्वितीयपादे अर्थवादनये "अभागिप्रतिषेधात" इति गुणसूत्रे "नान्तरिक्षे" इत्यादेरप्रसक्तनिषेधेनाप्रामाण्यमाशङ्क्य "अन्त्ययोर्यथोक्तम्" इति सिद्धान्तगुणसूत्रेण हिरण्यस्तुत्यर्थमितरनिन्दा क्रियते । 'असति प्रसङ्गे निषेधो नित्यानुवादः' इत्युक्तमभियुक्तैः । इह तु न तथा, विधेयान्तराभावादिति भावः । 'एव' इत्यनेनाभिमानिनयन्यायेन पृथिव्यादिशब्दानां अभिमानिन्येव मुख्यत्वान्मुख्यसम्भवे नामुख्यं ग्राह्यमिति सूचितम् । एतेन "पृथिव्यादीनामधिदैवत्वेन जडत्वाभावात्" इति टीका विवृता । "यमात्मा न वेद" इति पृथगुक्तिस्तु आत्माभिमानिपरत्वाद्युक्तेति भावः । ततश्च किमित्यतः उत्तरार्धं व्यनक्ति—**तेन चेति** । चेतनेनेत्यर्थः । लेशेन विदितत्वस्य सर्वत्र सम्भवेन तन्निषेधायोगात्, तदन्यथानुपपत्त्यैव साकल्येनाविदितत्वं लभ्यते । तच्च "न ते

चन्द्रिका

अन्तरत्वं च

बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् ॥

इति स्मृत्युक्तं, स्वतो नित्यतृप्तात् "प्रेयः पुत्रात्" इत्यादि-श्रुत्या परमप्रेयोरूपाच्च ब्रह्मणोऽन्यत्र न युक्तम् । किञ्च श्रुत्यन्तरे "दिव्यो देव एको नारायणः" इत्युपक्रम्य "यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद" इत्याद्युक्त्वा 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्युपसंहारान्नारायण एवान्तर्यामी ॥

प्रकाशः

बिष्णो जायमानः" इत्यादिभिः हरेरेवेत्यर्थः ) "यः पृथिवीमन्तरो यमयति" इति श्रुतान्तरत्वमपि निरवकाशमित्याह -- **अन्तरत्वं चेति** । 'अन्यत्र न युक्तं' इत्यन्वयः । 'स्मृत्युक्तं' बृहदारण्यक-भाष्योक्तस्मृत्युक्तमित्यर्थः । पूर्वार्धतात्पर्यं—**स्वतो नित्यतृप्तादिति** । उत्तरार्धतात्पर्यं—**प्रेय इत्यादि** । **श्रुत्येति** । वाजसनेयश्रुत्येत्यर्थः । सूत्रभाष्याद्युक्तमुपलक्षणं मत्वा स्वयं समाख्यामप्याह—**किञ्चेति** । 'श्रुत्यन्तरे' सुबालोपनिषदि । "तदाहुः किन्तदासीत्तस्मैवेह किञ्चनाग्र आसीत् अमूलमनाधारा इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणश्चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायणः" इत्याद्युपक्रम्य, "अन्तश्शरीरे

चन्द्रिका

पृथिव्यादेः शरीरत्वं यौगिकं गौणमेव वा ।
रूढस्यानुपपन्नत्वात् अग्नेरिन्द्रत्ववत् भवेत् ॥

यथा " इन्द्रो न तस्थौ " इतीन्द्रशब्दः गार्हपत्येऽपि स्वोचितैश्वर्यस्य

प्रकाशः

निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापः शरीरं योऽपोऽन्तरे सञ्चरन् यमापो न विदुः" इत्यादिना पृथिव्यब्वाय्वाकाशमनोहङ्कारबुद्धिचित्ताव्यक्ताक्षरमृत्युस्थत्वादिकमुक्त्वाऽन्ते " एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्युक्तत्वादित्यर्थः । अस्य प्रसिद्धत्वात् भाष्यादावनुक्तिः । यद्वा—" अधिदैवादिषु " इति सामान्योक्त्या श्रुत्यन्तरस्थाधिदैवादिप्रकरणस्यापि सूत्रादौ सङ्ग्रहसूचनादत्र तदुक्तिः । यद्वा—' तद्धर्मश्च व्यपदेशश्च ' इति समाहारद्वन्द्वेन " सम्भूतिद्युव्याप्ति " इतिवदयं सूत्रभाष्यटीकासु " तद्धर्मव्यपदेशात् " इति निर्देश इति मत्वा, व्यपदेशशब्दार्थतया समाख्योक्तिरिति सूत्रादेरर्थान्तरमपि ध्येयम् । यदपि पृथिव्यादिशरीरत्वं परसाधकं स्वबाधकं, तस्य " अतद्धर्माभिलापात् " इति द्वितीयसूत्रांशलब्धं सावकाशत्वं, " योगवृत्त्या तस्मिन् पृथिव्यादिशरीरत्वव्यपदेशोपपत्तेः " इति भाष्यटीकोक्तं अन्यत्रोक्तसावकाशत्वप्रकारं च सङ्गृह्णाह—**पृथिव्यादेरिति** । ननु रूढिर्बलवतीत्यत उक्तं—**रूढस्येति** । उक्तबाधकेभ्य इति भावः । दृष्टान्तांशं व्यनक्ति—**यथेति** । " कदाचन

चन्द्रिका

सद्भावाद्योगेन वा. इन्द्रवद्यज्ञसाधनत्वात् गौण्या वा वृत्त्या वर्तते। उक्त हि—

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसम्बन्धकारितम्।

इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः॥

इति। तथा शरीरशब्दोऽपि पृथिव्यादिषु योगेन वा शरीरवत् नियम्यत्वेन गौण्या वा वृत्त्या वर्तताम्। चेतनानामपि देहद्वारा

प्रकाशः

स्तरीरसि नेन्द्र'' इति पुरोनुवाक्या, "निवेशनः'' इति याज्या, ''इन्द्रो न तस्थौ'' इत्युपरिष्टाल्लक्ष्मश्रवणात्। तत्र ''ऐन्द्रया गार्हपत्यमुपतिष्ठते'' इति श्रौतविनियोगेन मन्त्रस्य गार्हपत्यशेषतया तत्प्रकाशकत्वान्मन्त्रस्थेन्द्रशब्दस्येदिधात्वर्थस्वोचितैश्वर्ययोगेन वा यज्ञ-साधनत्वगुणमूलया गौण्या वृत्त्या वेत्यर्थः। उक्तं हीति। तृतीये वार्त्तिककृतेत्यर्थः। पूर्वार्धं व्यनक्ति—तथेति।

शीर्यते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम्।

रमेत च परो ह्यस्मिन् शरीरं तस्य तज्जगत्॥

इति उक्तयोगेनेत्यर्थः। ननु यौगिकमपि शरीरत्वं पृथिव्यादेरपि चित्त्वेनायुक्तं, ''यस्यात्मा शरीरं'' इत्याद्ययोगश्च, चेतननित्यतायाः ''यावदात्मभावित्वाच्च न दोषः'' इत्यादौ सेत्स्यमानत्वा-दित्यत आह—चेतनानामपीति। तादृशदेहसम्बन्धश्च ''ज्ञोऽत एव'' ''युक्तेश्च'' इत्यत्र सेत्स्यतीति भावः। एतेन दिशामप्य-

चन्द्रिका

शीर्णताऽस्त्येव । शरीरत्वस्य गौणत्वं च बृहदारण्यकभाष्ये उक्तम् । तेन पुराणादिषु प्रपञ्चे ब्रह्मकायत्वाद्युक्तिरपि समर्थिता । एवञ्च "य आत्मनि तिष्ठन्" इत्यादिकं च क्लेशेन न नेयमिति । एतदेवाभिप्रेत्योक्तं न्यायविवरणे—"पृथिव्यादिशरीरत्वं च न निरवकाशं, यौगिकशरीरत्वोपपत्तेर्विष्णोरपि" इति ।

प्रकाशः

वान्तराभिमानिदेहद्वारा शीर्णताऽस्त्येवेति तत्रापि नायुक्तमिति ध्येयम् । गौणत्वं भाष्यटीकयोर्नोक्तमित्यत आह—**शरीरत्वस्येति** ।

पृथिव्याद्या देवतास्तु देहवद्यद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः ॥

इति स्मृत्या शरीरस्य यथा जीववशत्वं, तथा पृथिव्याद्यभिमानिजीवानामीश्वरवशत्वात्तच्छरीरत्वमिति गौणत्वमुक्तमित्यर्थः । तथा च भाष्यद्वयानुसाराद्एवमप्यस्माभिरुक्तमिति भावः । गौणत्वोक्तेः फलमाह—**तेनेति** । गौणत्वकथनेनेत्यर्थः । **पुराणादिष्विति** ।

स विश्वकायः पुरुहूत ईशः सत्यं परं ज्योतिरजः पुराणः ।

इत्यादिभागवतादिष्वित्यर्थः । **कायत्वादीति** । देहत्वविग्रहत्वाद्युक्तिरादिपदार्थः । **क्लेशेनेति** । तच्छरीरस्य प्राकृतत्वभेदाभेदादिना । **यौगिकेति** । गौणशरीरत्वेत्यपि ग्राह्यम् । अविदितत्वादिनिरवकाशबाधकबलेन प्रथमप्राप्ताया अपि रूढेः परित्यागोपपत्तेरिति भावः ।

### चन्द्रिका

सूत्रक्रमस्तु—आद्ये स्वपक्षसाधकोक्तिः, द्वितीये प्रधानजीवपक्षयोः साधकाभावोक्तिः, तृतीयसूत्रस्थस्य 'शारीरश्च' इत्यस्यात्रापि सम्बन्धात्, तृतीये जीवपक्षे बाधकोक्तिरिति ।

### प्रकाशः

**आद्य इति** । "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" इत्यत्र भाष्यादावविदितत्वान्तरत्वयोरुक्तेरिति भावः । 'द्वितीये' "न च स्मार्तमतद्धर्माभिलापात्" इत्यत्र भाष्ये त्रिगुणत्वोपादानत्वादिप्रधानधर्मोक्त्यभावात्कापिलस्मृतौ पृथिव्याद्यात्मकतयोक्तप्रधानं नान्तर्यामीत्युक्त्या संसारित्वादितद्धर्माभिलापाभावात् जीवोऽपि नेति लब्धत्वात् 'प्रधानजीव' इत्युक्तम् । जीवपदाभावात् कथमेतदित्यत आह—**तृतीयेति** । एतेन जीवपक्षे साधकं नेत्यनुक्त्वा कथं बाधकोक्त्यवसर इति प्रत्युक्तम् । एतेन "यज्जीवोऽन्तर्यामीत्युक्तम्, तदपि संसारित्वाद्यतद्धर्माभिलापादिना निरस्तमपि विशेषयुक्त्या पराकुर्वत्सूत्रं" इति टीकोक्तं सूत्रारूढं दर्शितम् । 'अतद्धर्माभिलापात्' इत्यत्र समासनिर्वाहस्तु "नानुमानमतच्छब्दात्" इत्यत्र करिष्यत इति भावः । **तृतीय इति** । "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इत्यत्र "आत्मनोऽन्तरः" इति माध्यन्दिनाः "विज्ञानादन्तरः" इति काण्वाश्च जीवं विज्ञानादन्तर्यामिणो भेदेनाधीयत इति शारीरो नान्तर्यामीति भेदाध्ययनरूपबाधकोक्तिरित्यर्थः । यद्यपि चकारात् "यस्तेजसि तिष्ठन्" इत्यादिना श्रीभूदुर्गारूपायाश्चि-

चन्द्रिका

अत्र यद्यपि

आत्मा विज्ञानमिति च सर्वजीवाभिमानवान् ।

ब्रह्मैवोक्तः ........................................ ।

इति बृहदारण्यकभाष्ये आत्मादिशब्दश्चतुर्मुखपर इत्युक्तम् । तथाऽपि पूर्वपक्षे "य आत्मनि" इत्यादावात्मादिशब्दस्याऽऽत्माभिमानिपरत्वे "यः पृथिव्यां" इत्यादौ पृथिव्यादिशब्दस्यापि तदभिमानिपरत्वापातेन "यः पृथिव्यां" इत्यादेरेव भेदाध्ययनत्वप्रसङ्गात्, पूर्ववादिना पृथिव्यादिशब्दानां जडपरता, आत्मविज्ञानशब्दयोस्तु शारीरपरता वाच्येत्यभिप्रेत्य तं प्रति "य आत्मनि"

प्रकाशः

त्प्रकृतेरपि भेदेनाधीतत्वात् न चित्प्रकृतिरन्तर्यामीत्यभिप्राय इति तत्त्वप्रदीपरीत्या चित्प्रकृतिपक्षेऽपि बाधकोक्तिपरत्वं भाति, तथाऽपि टीकारीत्यैवमुक्तिः । एतद्भाष्यस्य भाष्यान्तरविरोधं वा, अन्यत्रोक्तार्थे जीवान्तर्यामिभेदाध्ययनासिद्धिं वा, अर्थद्वयोक्तेर्वैयर्थ्यं वा हृदि कृत्वा तदनूद्य निराह—**अत्र यद्यपीति** । **पृथिव्यादिशब्दस्यापीति** । अन्यथा प्रायपाठविरोधादिति भावः । अभिमानिपरत्वे को दोष इत्यत आह—**य इति** । पृथिव्यादिशब्दानामभिमानिचेतनपरत्वे 'यः' इत्यनेन तदन्यस्य ग्रहणात् "एष त आत्माऽन्तर्यामी" इति पृथिव्याद्यभिमानिचेतनभिन्नस्यान्तर्यामितापत्त्याऽभिमानिजीव एवान्तर्यामीति पक्षो न स्यादिति जडपरता वाच्येत्यर्थः ।

चन्द्रिका

इत्यादेः शारीरभेदे प्रमाणत्वोक्तिः। यद्वा—जीवाभिमानिनश्चतुर्मुखादपि तन्नियामकत्वादिना भिन्नस्यान्तर्यामिणः किमु वक्तव्यं तदभिमन्यमानजीवेभ्यो भिन्नत्वमित्यभिप्रेत्य तदुक्तिः। **यद्वा**—"यः पृथिव्यां" इत्यादौ तत्तदभिमानिन एव तत्तदन्तर्यामित्वमिति वदता पूर्ववादिना "य आत्मनि" इत्यत्रापि जीवात्माभिमानिन एव तदन्तर्यामित्वं वाच्यम्। तच्चायुक्तं, "आत्मा विज्ञानं" इति स्मृत्या, अभिमानिप्रायपाठेन, अभिमान्यधिकरणन्यायेन च जीवाभिमानिन एव आत्मशब्दार्थत्वात्, अन्तर्यामिणश्च "य आत्मनि"

प्रकाशः

भाष्ये आत्मादिशब्दस्य सर्वजीवार्थत्वोक्तेः **कृत्यमुक्त्वा**, अन्यत्र चतुर्मुखपरत्वोक्तेः फलमाह—**यद्वेति**। 'तदुक्तिः' चतुर्मुखपरत्वोक्तिः। तथा चात्मविज्ञानशब्दयोः चतुर्मुखपरत्वमेव, न शारीरार्थकत्वम्। अत्र भाष्ये शारीरार्थकत्वस्य प्रदर्शनं तु कैमुत्यलब्धस्य, न तु शब्दार्थत्वेन प्राप्तस्येत्यर्थः। ननु पृथिव्याद्यभिमानिजीवानामन्तर्यामित्वे शङ्किते तेषामेवान्तर्यामिणा भेदस्य आदौ वाच्यत्वेनावश्यवाच्यस्य साक्षादवचनं, अनुपयुक्तं चतुर्मुखस्य तत्कथनं तु साक्षादित्ययुक्तमित्यतश्चतुर्मुखपरत्वमेवावश्यं वाच्यमिति भावेन तदुक्तिं साधयति—**यद्वेति**। **स्मृत्येति**। प्रागुक्तयेत्यर्थः। **अभिमानीति**। पृथिव्याद्यभिमानिप्रायपाठेनेत्यर्थः। **अभिमान्यधिकरणेति**। तत्र अभिमन्यमानशब्दानां अभिमानिनि मुख्यत्वोक्तेरिति भावः। ननु एवं

चन्द्रिका

इत्यादिना ततो भिन्नत्वेनाधीतत्वादित्यभिप्रेत्य तदुक्तिः । "यः पृथिव्यां तिष्ठन्" इत्यादिकं पृथिव्याद्यभिमानिभ्यो भेदेनाध्ययनं तु न्याय-तौल्येनोक्तप्रायत्वान्न पृथगुक्तम् । श्रुतौ "यः पृथिव्यां तिष्ठन्" इत्यादेः प्राथम्येऽपि भाष्ये "य आत्मनि तिष्ठन्, यो विज्ञाने तिष्ठन्" इति वाक्ययोरुपादानं तु तयोरैकार्थ्यं, तत्र चेतनपरत्वस्योभयवादिसम्मतत्वं च दर्शयितुम् । यद्यप्यन्तरशब्दस्य बृहदारण्यकभाष्ये बाह्यापेक्षां विन रमणादिरर्थ इत्युक्तम्, अत्रापि च भाष्येऽन्तरत्वं आद्यसूत्रस्थतद्धर्म-शब्दस्यार्थ इत्युक्तम् । भेदेनाध्ययनं तु "य आत्मनि तिष्ठन् यस्यात्मा शरीरं य आत्मानं यमयत्येष त आत्मा" इत्यादि-भेदकाध्ययनात् सिध्यति ।

प्रकाशः

पृथिव्यादिशब्दानामप्यभिमानिपरत्वात्तत्राप्यभिमानिनोऽन्तर्यामिणो भेदोक्ति-सम्भवेन भाष्ये "य आत्मनि" इत्यादिविशिष्यप्रदर्शनमयुक्तमित्यत आह—**यः पृथिव्यामिति** । प्रथमातिक्रमे हेतुमाह—**श्रुताविति** । टीकायां "आत्मनस्सकाशादन्तरो विविक्तः" इत्युक्तं, तदाचार्यसूक्ति-विरुद्धमित्याशङ्क्य समाधत्ते—**यद्यपीति** ।

बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् ॥

इत्यनेनेत्यर्थः । भेदोक्त्यर्थमर्थान्तरमेतत्किं नेति भ्रमं निराह—**भेदेनेति** । **भेदकेति** । सप्तमीषष्ठ्यादिरूपभिन्नविभक्तिनिर्देशरूपेत्यर्थः ।

चन्द्रिका

न च "एष त आत्मा" इत्यत्राऽऽत्मशब्दः स्वरूपार्थः, 'ते' इति षष्ठ्या औपचारिकत्वापातात् । शरीरशब्दसन्निधानेनात्मशब्दस्य शरीरप्रतिसम्बन्धिपरत्वाच्च । अत एव भाष्ये "य आत्मनि" इत्याद्यप्युदाहृतम् । तथाऽपि टीकायां साक्षादेव भेदाध्ययनसिद्ध्यर्थं "य आत्मनोऽन्तरः" इत्यत्रत्यान्तरशब्दस्य विविक्तत्वमर्थः । बृहदारण्यकभाष्यं तु "य आत्मानमन्तरः" इत्यत्रत्यान्तरशब्दविषयम् । अत एव श्रुतौ न पुनरुक्तिः "य आत्मनोऽन्तरः, यो विज्ञानादन्तरः, योऽद्भ्योऽन्तरः" इत्यादौ पञ्चम्युपपत्तिश्च । "यं पृथिवी न वेद यः पृथिव्या अन्तरः इत्यादिना" इत्याद्यसूत्रीयभाष्ये तु प्रतीकमुखेन "पृथिवीमन्तरः" इति वाक्यमुपात्तमित्यभिप्रेत्य "अन्तरो विविक्तः" इत्युक्तम् ॥

प्रकाशः

भेदकत्वं साधयति—न चेति । 'टीकायां' इत्यस्य 'इत्युक्तं' इत्यन्वयः* । पञ्चमीति । "आपादाने पञ्चमी" इति प्रकरणे "अन्याराादितरर्तेदिक्छब्दञ्चूत्तरपदाजाहियुक्ते" इति 'अन्य' इत्यर्थग्रहणेन पञ्चमीविधानात्, बाह्यानपेक्षरमणार्थत्वे 'पृथिव्याः' इत्यस्य वैयर्थ्यं च स्यादिति भावः । तर्हि भाष्ये "—यं पृथिवी न वेद यः पृथिव्या अन्तरः" इत्यादिनाऽधिदैवादिषु तद्धर्मव्यपदेशात्" इत्युक्तिः कथमित्यत आह—यमिति । अविदितत्वस्योक्त्यर्थं 'यं' इत्यादेरवश्यवाच्यत्वात्तन्मुखेन "यः पृथिवीमन्तरः" इत्येवाभिप्रेत-

* 'इत्यनेनान्वयः' इति च पाठान्तरम् ।

चन्द्रिका

अन्ये तु—शरीरादिराहित्यात् ब्रह्मणो न नियन्तृत्वं पटवदिति प्राप्ते, शरीरादिराहित्यमसिद्धं, चैत्रकर्मनिर्मितस्य चैत्रशरीरत्ववत् ब्रह्मविषयकाविद्याकल्पितस्य जगतस्तच्छरीरत्वादिति सिद्धान्तः ।

प्रकाशः

मित्यर्थः । अत एव टीकायां वाक्यशेषमनुपादायाद्यसूत्रे 'पृथिव्याद्यविदितत्वान्तरत्वाख्यधर्मव्यपदेशात्' इति सामान्येनोक्तमिति भावः ॥

**अन्ये त्विति** । अत्रान्तर्यामी किं प्रधानमुत पृथिव्याद्यभिमानिदेवता, किं प्राप्तऽणिमाद्यैश्वर्यः कश्चिद्योगी जीवः, अथ परमात्मेत्यादि भाष्ये प्रदर्शितम् । भामत्यां तु अचेतस्य प्रधानस्य द्रष्टृत्वश्रोतृत्वविज्ञातृत्वादीनां, "एष आत्मा" इत्युक्तात्मत्वस्य चायोगात्, पृथिव्याद्यभिमानिनो देवस्य प्रतिनियनियमनात् "यः सर्वान् लोकानन्तरो यमयति यस्सर्वाणि भूतान्यन्तरो यमयति" इत्युक्तसर्वलोकभूतनियमनायोगात्, योगिजीवस्य च "जगद्व्यापारवर्जं" इति वक्ष्यमाणन्यायेन ज्ञानिनो नियमनादिव्यापाराभावात् न प्रधानाभिमानिदेवयोगिजीवानामत्र सन्देहविषयता । किन्तु जीवमात्रं वा परमात्मा वेति सन्देहे जीवमात्रमेव, लोके चेतनस्य शरीरिणः स्वशरीरेन्द्रियादौ शरीरेण पास्यादौ नियमनादिकार्योपलम्भात् । जीवस्य च शरीरेन्द्रियादिमत्त्वाद्द्रष्टृत्वादिसम्भवाच्च । अदृष्टादिद्वारा सर्वलोकादिनियन्तृत्वोपपत्तेश्च । 'यः' इत्येकवचनस्य च जात्यभिप्रायत्वात् । न च जीवस्याप्यन्यो नियन्ताऽऽवश्यक इति वाच्यं, तस्याप्यन्यः तस्या-

चन्द्रिका

तदुक्तं भामत्यां—

देहेन्द्रियादिनियमे नास्य देहेन्द्रियान्तरम् ।
तत्कर्मोपार्जितं तच्चेत्तदविद्यार्जितं जगत् ॥

प्रकाशः

प्यन्य इत्यनवस्थापत्तेः । उक्तं च—

स्वकर्मोपार्जितं देहं तेनान्यच्च नियच्छति ।
तक्षादिरशरीरस्तु नात्मान्तर्यामितां भजेत् ॥

इति । एवं प्राप्ते सर्वस्य विकारजातस्य तदविद्याशक्तिपरिणामत्वात्तस्य च चैत्रकर्मनिर्मितस्य चैत्रशरीरादिस्ववत् ब्रह्मणः शरीरेन्द्रियादिस्थानत्वात् यथायथं पृथिव्यादिकार्यकारणैस्तानेव पृथिव्यादिदेवान् शक्नोति नियन्तुमिति अधिदैवादिषु उक्तोऽन्तर्यामी ब्रह्मैव, आत्मत्वामृतत्वादिधर्माणां व्यपदेशात् न चानवस्था, "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुत्या नियन्तृब्रह्मणो नियम्यजीवात् भेदानभ्युपगमात् । अविद्याकल्पितजीवपरमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतय इति सिद्धान्त इत्यर्थः **देहेन्द्रियादीति** । किमिदमशरीरत्वं, यतो नियन्तृत्वाभाव उच्यते । नियम्यातिरिक्तदेहराहित्यं वा, देहसम्बन्धाभावो वा । नाद्यः, अस्य जीवस्य स्वदेहादिनियमने कार्ये न देहान्तरमस्तीति व्यभिचार इत्यर्थः । द्वितीयं शङ्कते—**तत्कर्मेति** । जीवे स्वकर्मार्जितदेहसम्बन्धोऽस्तीति चेत्, परस्यापि देहासम्बन्धोऽसिद्ध इत्याह—**तदविद्येति** ।

चन्द्रिका

इतीत्याहुः । तन्न, तदविद्याकल्पितस्य तच्छरीरत्वे ब्रह्मवत् स्वतश्शरीरशून्यशुक्तिस्थाण्वाद्यज्ञानकल्पितस्य रूप्यदेहादेः शुक्तिस्थाण्वादिशरीरत्वापातात् । ब्रह्मणः स्वाविद्याकल्पितेनास्मदादिसंसारेण संसारित्वापाताच्च । जगदार्जनात् प्रागशरीरस्यैव स्रष्टृत्ववत् नियन्तृत्वस्याप्युपपत्तेश्च । न चाशरीरस्यानियन्तृत्वे शङ्किते गौणशरीरोपपादनं युक्तम् । किञ्च शुद्धं न नियन्तृ, अशुद्धं त्वविद्याकल्पितत्वान्नाविद्याविषयः ।

प्रकाशः

तद्विषयत्वादविद्यायाः तदविद्यात्वम् । पूर्वपक्षभागस्य प्रागेव अस्मदीयपूर्वपक्षेषु दूषितत्वात्, अतिप्रसङ्गापादनेन सिद्धान्तांशं निराह— **तन्नेति । रूप्यदेहादेरिति** । यथाक्रममन्वयः । नन्वगत्या स्रष्टृत्वाङ्गीकारेऽपि न नियमनं तथा वाच्यमित्यत आह—**न चेति** । अस्तु वा तदज्ञानकल्पितं तच्छरीरमिति, तथाऽपि किं शुद्धस्येदं शरीरमुत विशिष्टस्येति विकल्प्य क्रमेण निराह—**किञ्चेति** । शुद्धस्य नियन्तृत्वमेव नास्ति, निर्विकारत्वात्तस्य शरीराद्युपपादनक्लेशो व्यर्थः । विशिष्टं तु नियामकं भवति, तस्याविषयत्वाभावान्न तदीयत्वमविद्याया इति न तदविद्यार्जितं जगदिति न तच्छरीरत्वम् । उक्तं च—

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

चन्द्रिका

यच्चोक्तं—देहादिनियन्तुरपि जीवस्य भिन्ननियन्तृनियम्यत्वे तन्नियन्तुरीश्वरस्यापि भिन्ननियन्तृनियम्यत्वेनानवस्थापातात नियन्तृ ब्रह्म नियम्यजीवाभिन्नमिति, तन्न, अभेदे सुतरां नियन्तृत्वायोगात् । श्रुतिसूत्रयोर्भेदोक्त्ययोगाच्च । काल्पनिकभेदेन नियन्तृत्वादिकं युक्तमिति चेत, तर्हि यथा देहादिनियन्तुर्जीवस्य व्यावहारिकभेदवानीशो नियन्ता, तथेशस्यापि व्यावहारिकभेदवानन्यो नियन्ता स्यादिति व्यावहारिकनियन्तृपरम्परया अनवस्था स्यात् । अथ "न वैशेष्यात" इत्युक्तन्यायेन ईशस्य स्वातन्त्र्यादिविशेषान्न नियन्त्रन्तरं, तर्ह्यनवस्थापरिहारो नाभेदेन, किन्तु स्वातन्त्र्येणेति सत्यभेद एवास्तु । किञ्चानवस्थातो बिभ्यता शरीरजीवयोरैक्यं स्वीकार्यम् । प्रमाणविरोधश्च जीवपरयोरैक्येऽपि "भेदेनैनमधीयते" इति सूत्र एवोक्तः ।

प्रकाशः

इति । अनवस्थाशङ्कापरिहारौ च भाष्योक्तावनूद्य निराह—**यच्चेति** । प्रतिबन्दीमापादयन् अनवस्थापरिहारं प्रकारान्तरेण तेनैव वाचयति—**तर्हीति** । 'उक्तन्यायेन' "सर्वत्र" इत्यधिकरणसूत्रेणोक्तन्यायेनेत्यर्थः । **किञ्चेति** । कियन्तं दूरं गत्वा अभेदाश्रयणेन किमित्यर्थः । ननु देहभेदे तस्य नाशे अस्यापि नाशेन स्वर्गाद्युद्देशेन धर्माधर्मादिविधायकप्रमाणविरोधोऽनुभवविरोधश्चेत्यत आह—**प्रमाणविरोधश्चेति** । अनवस्थानिरासाय नियन्तुर्नियम्याभेदे अङ्गीक्रियमाणे कार्यस्याप्यभिन्नकारणजन्यत्वं स्यादन्यथोक्तदोषादिति जडाभेदोऽ-

चन्द्रिका

किञ्चैवं सति स्वकार्यं प्रति कारणस्यापि पृथिव्यादिकस्य ब्रह्मकार्यत्वे ब्रह्मणोऽप्यन्यकार्यत्वमित्यनवस्थापरिहाराय पृथिवीब्रह्मणोरभेदः स्यात् । प्रमाणविरोधस्तु जीवपरयोरैक्येऽपि सम इत्युक्तम् । यच्चोक्तं—एकस्मिन् शरीरे प्रत्यग्द्वयं नेति, तन्न, मां प्रति दृष्टान्ताभावात् । ग्रहाद्याविष्टशरीरेऽहमर्थरूपप्रत्यग्द्वयदर्शनाच्च । "हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन् उत्क्रान्ते" "हन्तेदं पुनश्शरीरं प्रविशाम तद्यस्मिन् नः प्रपन्ने" इत्यादावेकस्मिन् शरीरे चक्षुराद्यभिमान्यनेकाहमर्थश्रवणाच्च ।

प्रकाशः

प्युपेयः स्यादित्याह—**किञ्चैवं सतीति** । ननु "यः पृथिव्यां तिष्ठन्" इत्यादिभेदोक्तिर्विरुध्यत इत्यत आह—**प्रमाणेति** । उपलक्षणमिदम्, पृथिव्यादेः स्वव्यतिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञानापेक्षत्वेनानवस्थाप्रसङ्गात्, तन्निरासाय ज्ञानजडयोरभेदः स्यात् । ज्ञानस्य स्वप्रकाशत्वे नियन्तुः स्वातन्त्र्यमस्तु । एवं पृथिव्यादेस्स्वव्यतिरिक्तेन धारणे तत्रापि तथेत्यनवस्थेत्यपि ध्येयम् । ननु नानवस्थानिरासाय नियन्त्रभेदः, अपि तु प्रत्यक्चैतन्यद्वयायोगात् उभयोरभेद इत्येतदनूद्य निराह - **यच्चेति** । **मां प्रतीति** । जीवेशभेदवादे प्रतिशरीरं तयोः सत्त्वादिति भावः । **अनेकाहमर्थेति** । बहुवचनप्रयोगादिति भावः । ननु तत्र प्रत्यक्त्वमेव सत्यं, भेदो मिथ्येति चेत्, भेदस्सत्यः प्रत्यक्त्वं मिथ्येति किं न स्यात् ।

चन्द्रिका

बाधकाभावाच्च । अन्तर्याम्युक्त्यनन्तरं "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधो बाधक इति त्वन्यत्र निरस्तम् । अत्र यदुक्तं विवरणे "यो विज्ञाने तिष्ठन्" इत्यादौ ब्रह्मणो जीवावच्छेदेषु नियन्तृत्वेनावस्थानं श्रूयते । तच्च यद्यप्यवच्छेदपक्षे न युक्तं, घटावच्छिन्नाकाशप्रदेशे बाह्याकाशस्यादर्शनेन द्विगुणीकृत्य वृत्त्यनुपपत्तेः, जीवप्रदेशे ब्रह्मणोऽवस्थानायोगात् । तथाऽपि प्रतिबिम्बपक्षे युक्तं,

प्रकाशः

प्रत्यक्त्वे बाधकं नेति चेत्, तुल्यं भेदेऽपीत्याह—**बाधकेति** । अतः शब्दपरामर्शं दर्शयितुं, 'अन्तर्याम्युक्त्यनन्तरं' इत्युक्तम् । 'अन्यत्र' न्यायामृते द्वितीयपरिच्छेदे "अहं ब्रह्मास्मि" इत्यादिश्रुत्यर्थवर्णनप्रस्तावे । तत्र 'अतः' इत्यनेन प्रस्तुतसर्वनियन्तारं परामृश्य अन्यो द्रष्टा नास्तीत्युक्ते 'अस्मिन् ग्रामे अयमेव सर्वनियामको नान्यः पुरुषोऽस्ति' इत्यादावन्यशब्दस्य प्रस्तुतसदृशपरतया व्युत्पन्नत्वेन, इहापि सर्वनियामकद्रष्ट्रन्तरनिषेधात्, भेदनिषेधाभावादिति निरस्तमित्यर्थः । "नेह नाना" इत्यादिकमप्यन्यत्र प्रथमपरिच्छेदे निरस्तमिति भावः । विवरणे अवच्छेदपक्षे अन्तर्याम्यवस्थानं न युक्तं, प्रतिबिम्बपक्ष एव युक्तमित्युक्तं, तदयुक्तं, पक्षद्वयेऽप्ययोगादिति दूषयितुमनुवदति – **अत्रेति** । **अवच्छेदेति** । अविद्यावच्छिन्नो जीवस्तत्र प्रतिबिम्बितो वा जीव इति मतद्वयम् । अत्राद्य इत्यर्थः । कुत इत्यत आह—**घटेति** ।

चन्द्रिका

जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनेन द्विगुणीकृत्य वृत्त्युपपत्तेरिति, तत्र ब्रूमः—

घटाकाशे यथा बाह्याकाशं नैवोपलभ्यते ।
तथैव प्रतिबिम्बेऽपि बिम्बाकाशं न दृश्यते ॥

यथा घटस्यान्तः आकाशमात्रेऽवच्छिन्नाकाशे च सत्यपि बाह्याकाशं नास्ति, तथा जलस्यान्तराकाशमात्रे प्रतिबिम्बाकाशे च सत्यपि बिम्बाकाशं नास्त्येव । ननु तथाऽपि जलस्यान्तरुक्तमाकाशद्वयं जलावच्छिन्नाकाशं चेति तत्त्रयमस्ति, घटस्यान्तस्तूक्ताकाशद्वयमेवेति वैषम्यमिति चेन्न, यस्याकाशादेर्जलेनावच्छेदः तत्र प्रतिबिम्बनं च तत्र त्रितयसद्भावेऽपि, यस्य प्रतिबिम्बनमात्रं दर्पणादौ मुखादेः, तत्र त्रितयाभावेन प्रतिबिम्बपक्षपातायोगात् ।

प्रकाशः

युक्ततामाह—**जलेति** । अवच्छेदपक्षे यथा युक्तता, तथा प्रतिबिम्बपक्षेऽपीति परोक्तं दृष्टान्तीकृत्याह—**घटेति** । श्लोकं व्याचष्टे—**यथेति** । **नास्त्येवेति** । तथा च बिम्बरूपत्वादन्तर्यामिणः तत्र नावस्थानमिति भावः । प्रतिबिम्बपक्षे अवच्छेदवैलक्षण्यमाशङ्कते—**नन्विति** । **उक्तमिति** । बिम्बप्रतिबिम्बत्वरहितमाकाशमात्रं प्रतिबिम्बाकाशं चेति द्वयमित्यर्थः । **द्वयमेवेति** । आकाशमात्रमवच्छिन्नं चेति द्वयं, न तु प्रतिबिम्बाकाशमित्यर्थः । तस्यास्वच्छतया प्रतिबिम्बनानुपाधित्वादिति भावः । **त्रितयाभावेनेति** । तथा च ब्रह्मणोऽविद्यायां

चन्द्रिका

ननु नर्हि ब्रह्मणोऽविद्ययाऽवच्छेदस्तत्र प्रतिबिम्बनं चेति द्वयमप्यस्त्विति चेन्न, यत्र द्वयं तत्र यद्यपि जलान्तर्जलाच्छिन्नाकाशे सत्येव पुनराकाशमात्रं प्रतिबिम्बाकाशं चास्ति, तथाऽपि जलान्तर्बाह्याकाशस्य बिम्बाकाशस्य चाभावेन तत्स्थानीयस्य ब्रह्मणो जीवप्रदेशे नियन्तृत्वेनावस्थानायोगात् । आकाशमात्रस्थानीयस्य चिन्मात्रस्य त्वन्मते अनियन्तृत्वात् । तस्मादवच्छेदप्रतिबिम्बनयोर्विकल्पे समुच्चये वा ब्रह्मणोऽन्तर्यामित्वायोगः ।

प्रकाशः

प्रतिबिम्बितमात्रत्वेन, तत्र चिन्मात्रस्य प्रतिबिम्बितस्य च घटादावाकाशद्वयस्येव, दर्पणादौ मुखमात्रप्रतिबिम्बमुखरूपद्वयस्येव भावेऽपि, त्रितयाभावेनावच्छेदपक्षत्यागेन प्रतिबिम्बपक्षस्वीकारायोगादित्यर्थः । ननु सत्यं, यत्रैकस्यावच्छेदः प्रतिबिम्बनं च, तत्र सामान्यं प्रतिबिम्बितमवच्छिन्नं चेति त्रितयमन्यत्र द्वयमिति । तथाऽपि प्रकृते तथाऽस्त्विति शङ्कते — **नन्विति** । किमेतावता एकस्मिन्नेव देहे अवच्छिन्नं प्रतिबिम्बितं चिन्मात्रं चेति ब्रह्मत्रयसिद्धावपि तत्रावच्छिन्नं वा प्रतिबिम्बितं वा नान्तर्यामि, तस्य नियम्यरूपजीवत्वात् । अथ तत्रत्यं चिन्मात्रं वा, सार्वज्ञ्याद्युपेतं बिम्बभूतं ब्रह्म वा तथेति वाच्यमिति भावेन, अन्त्ये दोषमाह—**यत्रेति** । 'द्वयं' अवच्छिन्नं प्रतिबिम्बितं चेत्यर्थः । आद्ये दोषमाह—**आकाशमात्रेति** । **विकल्प इति** । घटादावाकाशस्येवावच्छेदमात्रं न प्रतिबिम्बनं,

चन्द्रिका

किञ्चावच्छेदोपाधौ घटादौ अवच्छिन्नाकाशव्यतिरेकेणाकाशव्यक्त्यन्तरं, प्रतिबिम्बनोपाधौ दर्पणादौ च प्रतिबिम्बव्यतिरेकेण मुख्यव्यक्त्यन्तरं नास्तीत्यन्यत्रोक्तम् । यच्चोक्तमुभाभ्यां—आद्यसूत्रे अधिदैवादिषु योऽन्तर्यामी स परमात्मेत्यन्वय इति, तन्न, तथात्वे 'अधिदैवादिषु' इत्यस्य वैयर्थ्यात् ।

प्रकाशः

दर्पणादौ मुखस्येव ब्रह्मणोऽविद्यायां प्रतिबिम्बनमात्रं न त्ववच्छेद इति विकल्पपक्षे, जलादावेकस्याकाशस्येव ब्रह्मण एकस्मिन् देहे अविद्ययाऽवच्छेदः प्रतिबिम्बनं चेति समुच्चयपक्षे चेत्यर्थः । पक्षद्वयेऽप्यन्तर्यामिभूतस्य तत्राभावादिति भावः । नन्ववच्छेदपक्षे प्रतिबिम्बनपक्षे च यच्चिन्मात्रमाकाशस्थानीयं तदेवागत्या नियन्तृ स्यादिति कश्चिद्ब्रूयात्तं प्रत्याह—**किञ्चेति** । 'अन्यत्र' न्यायामृते । एवमधिकरणप्रमेयं परमते निरस्य, मायिमते रामानुजमते च सूत्राक्षारार्थानुपपत्तिमाह—**यच्चेति** । केषाञ्चिदधिकरणशरीरं परमतादनतिभिन्नत्वान्न पृथग्दूषितम् । तथा हि—प्रधानस्य वाक्यशेषोक्तद्रष्टृत्वाद्ययोगेन शङ्कितुमयोग्यत्वात्, अयमन्तर्यामी ऐश्वर्ययोगविशेषनिमित्तप्रकृष्टादृष्टवान् जीवविशेषः परमात्मा वेति सन्देहे, वाक्यशेषे द्रष्टा श्रोता मन्ता" इति करणजन्यदर्शनश्रवणमननादिरूपज्ञानवत्त्वश्रवणात् तस्य च जीव एव सम्भवात् द्रष्टृत्वादेः करणजन्यज्ञानपरत्वमनङ्गीकृत्य रूपादिसाक्षात्कारमात्रपरत्वेऽङ्गीक्रियमाणे

प्रकाशः

रूपादिसाक्षात्कारस्य जीवपरयोः साधारण्येन अस्मिन् प्रकरणे "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधायोगात करणायत्तज्ञानपरत्वात्, जीवस्यैतादृशद्रष्टृत्वेन निषेधायोगात्तद्बलेन "आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद" इत्यात्मस्थित्यन्तरत्वाविदितत्वनियंतृत्वादेः कथञ्चिन्नेयत्वात् जीवविशेष एवान्तर्यामीति प्राप्ते, "यः पृथिव्यां तिष्ठन्" इत्यादिषु पृथिव्यादिसर्वभूतान्तःप्रवेशसर्वनियमनसर्वशरीरकत्वादितद्धर्मोपदेशात् परमात्मैव। "द्रष्टा" इत्यादिवाक्यशेषस्तु रूपादिसाक्षात्कारमात्रपरो न करणायत्तज्ञानपरः। स च "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिना परस्यैव। "नान्योऽतोऽस्ति" इति द्रष्ट्रन्तरनिषेधस्तु स्वातन्त्र्येण द्रष्ट्रन्तरनिषेधपर इति सिद्धान्त इति। अत्र प्रधानपूर्वपक्षस्य प्रागेव समर्थनेन तत्त्यागोऽयुक्तः। अन्यथा "न च स्मार्तं" इति प्रधानप्रत्याख्यानायोगः। यदत्रोक्तं श्रुतप्रकाशे—"न च स्मार्तं" इति दृष्टान्ततयैवोपन्यस्तो न प्राधान्येन अत एव "न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च" इत्येवमन्तमेकं सूत्रमिति, तन्न, दृष्टान्तत्वद्योतकाभावात्। अन्यथा "नानुमानमतच्छब्दात्" "प्राणभृच्च" इत्यादावपि तथात्वापत्तिः। दृष्टान्तोपादानस्य वैयर्थ्याच्च। 'न च शारीरः स्मार्तवत्' इत्यादिविन्यासापाताच्च। प्रधानशङ्कानुदयादेवं कल्पनमिति

चन्द्रिका

विषयवाक्यसूचनस्यान्तर्यामिपदेनैव सिद्धेः। अन्यथा "अन्तस्तद्धर्म" इत्यादावादित्यादिष्वन्तरिति साध्यं निर्दिश्येत। तस्मादधिदैवादिप्रकरणेषु तद्धर्मव्यपदेशादिति यथाश्रुत एवान्वयः। परं हि वैयर्थ्यादपि लक्षणा। एवं हि न केवलं तद्धर्मव्यपदेशमात्रं, किन्तु तस्याभ्यासोऽप्यस्तीति सूचितम्। यच्च द्वितीयसूत्रे तद्धर्माभिलापो नाम प्रधानधर्मविरुद्धधर्माभिलाप इत्युक्तं, तन्न,

प्रकाशः

चेन्न, तच्छङ्कोदयस्य मूल एवोक्तत्वात्। 'शारीरश्च' इति च शब्दास्वारस्याच्च। अस्यापि जीवमात्रनिरासपरत्वे योगविभागायोगेन "अतद्धर्माभिलापाच्छारीरश्चोभयेऽपि हि भेदनैनमधीयते" इत्येकवाक्यतयैव विन्यासः स्यादिति। नन्वधिदैवादिचिह्नितेषु वाक्येष्विति विषयसूचनार्थं तदित्युक्तमित्यत आह—**विषयेति**। ननु भवन्मतेऽप्यधिदैवादिप्रकरणेष्विति प्रकरणलक्षकत्वाल्लक्षणादोष इत्यत आह—**परं हीति**। अत एव "एकादश वै पशोरवादानानि तानि द्विरवद्यति" इति वाक्यवैयर्थ्यपरिहाराय "यद्यपि चतुरवर्त्ती यजमानः पञ्चावत्तैव वपा कार्या" इत्यत्र वपाशब्दे पाशुकहविर्मात्रलक्षणेति स्वीकृतं मीमांसकैरिति भावः। अत्र सूत्रे एवमपि न वैयर्थ्यनिस्तार इत्यत आह—**एवं हीति**। अत्र 'अधिदैवाधिलोकादिषु' इति पाठः कैश्चित्कल्पित एव न वास्तव इति ध्येयम्। **इत्युक्तमिति**। उभाभ्यामिति वर्तते।

चन्द्रिका

आद्यसूत्रस्थेन "तद्धर्मव्यपदेशात्" इत्यनेन पुनरुक्तेः । ब्रह्मधर्मो हि प्रधानधर्मविरुद्ध एव । तस्मात्त्रिगुणत्वादिधर्माभिलापाभावादित्येवार्थः । किञ्च—भेदव्यपदेशात्" "भेदव्यपदेशाच्चान्यः" "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात" इत्यादिकमतीतं, "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इति वर्तमानं, "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" "भेदव्यपदेशात्" इत्यादि चाऽऽगामि भेदप्रतिपादकं

अद्वैतिभिर्व्याक्रियते कथमद्वैतदूषकम् ।
सूत्रजातं स्वसिद्धान्ततया लज्जां विनैव तु ।।
यदि मिथ्यार्थवादीनि सूत्राणीत्येव कीर्तनम् ।
सूत्रव्याख्या तर्हि वेदबोध्यमिथ्यात्वबोधकः ।

प्रकाशः

**तस्मादिति** । अत्र समासोपपत्तिस्तु "अतच्छब्दात्" इत्यत्र वक्ष्यत इति भावः । तृतीयसूत्रं मायिमते अनुपपन्नमिति वदन् प्रसङ्गादतीतानागतभेदसूत्राणि सर्वाण्यप्ययुक्तानीत्याह—**किञ्चेति** । 'भेदप्रतिपादकं' इत्यस्य 'सूत्रजातं' इति श्लोकगतेनान्वयः । 'इत्यादि च' इत्यपि तेनैवान्वेति । का कथंतेत्यत उक्तं—**अद्वैतदूषकमिति** । मिथ्याभेदपरत्वेन अद्वैताविरोधित्वात् का लज्जाप्रसक्तिरित्यत आह— **यदीति** । ननु यथाऽर्थवादानां मिथ्यार्थावलम्बनेन प्राशस्त्ये तात्पर्यात् प्रामाण्यं, तद्वत् सूत्रादीनि सर्वाणि मिथ्यार्थवादीन्यपि तात्त्विकशुद्धचैतन्यतात्पर्यविषयोपेतानि भविष्यन्ति, नैवं बौद्धमत इत्यत आह—

चन्द्रिका

बौद्धागमोऽपि वेदस्य व्याख्यारूपः प्रसज्यते ।
बौद्धोऽपि ब्रह्मसूत्राणि व्याख्यायान्ते भवानिव ।।
मिथ्यैषोऽर्थः किन्तु तत्त्वं शून्यमेवेति कीर्तयेत् ।
असद्वेत्यादिवचनं तस्य स्यात्तत्त्ववेदकम् ॥
अपौरुषेयभावेन प्रयुक्ता च प्रमाणता ।
व्यावहारिकमात्रेण नार्थेन परितुष्यति ॥
असकृच्छ्रुतिभिः सूत्रैर्भेदे यत्नेन साधिते ।
मिथ्यार्थतां कथं ब्रूयात् सूत्राणां भाष्यकृत्स्वयम् ॥
सौगता वेदबाह्या हि वेदाप्रामाण्यवादिनः ।
अवैदिका इति ज्ञात्वा वैदिकैः परिवर्जिताः ॥

प्रकाशः

**बौद्धोऽपीति** । ननु न तस्य तथा वचने तत्त्वावेदकवचनं मानमस्ति, मम तु अस्ति "सदेव" इत्यादिकमित्यत आह—**असद्वेत्यादीति** । ननु तेन असदर्थकत्वमागमादेरुच्यते, मया तु व्यावहारिकसदर्थकत्वमित्यत आह—**अपौरुषेयेति** । अयुक्तं च मिथ्यार्थकथनमित्याह—**असकृदिति** । तन्मतदूषणस्य फलमाह—**सौगता इति** । 'प्रविश्य' विचार्य । ननु "अस्मायामेधास्रजो विनिः" इति मायावीति भाष्यं, सत्यं, "व्रीह्यादिभ्यश्च" इति इनिप्रत्यये मायीति साधु । **स्पष्ट इति** । उपन्यासमुखेन विवृत इत्यर्थः । **एतेन** अत्रान्तर्यामी नारायणश्चतुर्मुखो चेति पूर्वपक्षं कृत्वा, अधिदैवादिषु

चन्द्रिका

वेदान् प्रविश्य वेदानामप्रामाण्यं प्रसाधयन् ।
मायी तु यत्नतस्त्याज्यो वैदिकैर्हितशत्रुवत् ॥

टीकाक्षरार्थस्तु स्पष्टः ॥

प्रकाशः

श्रूयमाणोऽन्तर्यामी शिव एव, सर्वान्तरत्वरूपधर्मस्याथर्वशिरसि "ते देवा रुद्रमपृच्छन्' इति प्रस्तुतरुद्रनिष्ठतया "सोऽन्तरादन्तरं प्राविशत्" इति श्रवणादिति केनचित्प्रलपितं प्रत्युक्तं, सूत्रोपात्तप्रधानपक्षत्यागायोगात् । "दिव्यो देव एको नारायणः" इति मूलोक्तसमाख्याविरोधेन, तत्र तत्र भाष्योदाहृतानेकवचनविरोधेन च शिवान्तर्यामित्वस्य बाधितत्वाच्च । "सोऽन्तरादन्तरं प्राविशत्" इति अथर्वशिरोवाक्येऽपि न शिवस्यान्तर्यामित्वमुच्यते, किन्तु 'सः' इति प्राक् प्रकृतरुद्रान्तर्यामिणं नारायणमेव परामृश्य "अन्तरादन्तरं-प्राविशद्दिशश्चैवान्तरा" इति नारायणस्यैवान्तर्यामित्वमुच्यते । "विश प्रवेशने" इतिधातुनिष्पन्नविष्णुशब्दार्थस्य "सर्वा दिशो विष्टोऽस्मि" इत्यैतरेयभाष्योक्तदिशा 'प्राविशत्' इत्यनेन ज्ञापनाच्च । अन्यथा——

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।

इत्यादिविरोधापत्तेः । विस्तरस्तु गुरुपादकृतपरतत्त्वप्रकाशिकायां ध्येयः । सूत्रास्वारस्यं च रामानुजमत इव ज्ञेयम् ।

इति अन्तर्याम्यधिकरणम् ॥

---

## —अथ अदृश्यत्वाधिकरणम्—

अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्युक्त्वा,

यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥

तत्त्वप्रकाशिका

अत्राक्षरशब्दसाहित्येनान्यत्रप्रसिद्धादृश्यत्वादिलिङ्गानां ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । श्रुत्यादिसङ्गतिं विषयवाक्योदाहरणेन विषयसंशयौ सयुक्तिकं पूर्वपक्षं च सूचयति—अदृश्यत्वादीति । "अदृश्येऽनात्म्ये" इत्यानन्दमयस्यादृश्यत्वादिगुणा उक्ताः । ते चाथर्वणे कस्यचिदक्षरस्योच्यन्ते, "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" इति । तेषां च विष्णवन्यनिष्ठत्वे प्रागुक्तानन्दमयत्वं चान्यस्यैव स्यादित्यवश्यं निर्णेतव्यता । तददृश्यत्वादिलिङ्गजातमत्र विषयः । विष्णोरन्यस्य

इत्युक्त्वा तस्माच्च "अक्षरात्परतः परः" इति परः प्रतीयते। अतो ब्रवीति—

## ओम् अदृश्यत्वादिगुणको धर्मोक्तेः ओम् ॥ २१ ॥

पृथिव्यादिदृष्टान्तमुक्त्वा, "अक्षरात्सम्भवतीह विश्वम्" इत्यतः परं तत्परतः पराभिधानात्, "कूटस्थोऽक्षर उच्यते" इति स्मृतेश्च प्रकृतेः प्राप्तिः।

---

तत्त्वप्रकाशिका

वेति संदेहः। आनन्दमये श्रुतत्वमक्षरशब्दश्च सन्देहबीजम्। न विष्णोरदृश्यत्वादीति तावत्पूर्वः पक्षः, अदृश्यत्वादिगुणके "अक्षरात्सम्भवतीह विश्वम्" इत्यक्षरशब्दश्रवणात्, तस्य च विष्णौ निरवकाशत्वात्, यतोऽस्मादप्यक्षरादुत्तरवाक्ये परः प्रतीयते,

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥

इति। न हि विष्णोरपि परोऽस्तीत्यतो न विष्णुरदृश्यत्वादिगुणक इति नानन्दमयोऽपीति भावः। सिद्धान्तयत्सूत्रं तावदवतारयति—**अत इति**। अदृश्यत्वादिकं न विष्णोश्चेत्तर्हि वाक्यस्य निर्विषयतयाऽप्रामाण्यं स्यादित्यतः पूर्वपक्षं विशदयति—**पृथिव्यादीति**। अदृश्यत्वादिकं जडप्रकृतेः भवेत्, अस्याः पृथिव्यादिदृष्टान्तेनोपादानतया जगत्कारणत्वोक्तेः। न चायं कारणत्वमात्रे दृष्टान्त इति वाच्यम्, इत्यतो वाक्यादनन्तरं "अक्षरात्परतः परः" इति

ब्रह्मशब्दात्तत्परतः पराभिधानादेव च हिरण्यगर्भस्य। "तमेवं विद्वानमृत इह भवति"

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया।

तत्त्वप्रकाशिका

तस्मात्परतः पराभिधानात्। चेतनप्रकृतेर्वाऽदृश्यत्वादिकम्, तस्यामक्षरशब्दस्य स्मृतिसिद्धत्वात्। न चासौ शब्दः परमात्मन्यपि सम्भवतीति वाच्यम्, तत्परतः पराभिधानात्। तच्च तस्यां 'अक्षरात्परतः परः" इति सामानाधिकरण्येनोपपन्नम्। विकारित्वेन जगत्कारणत्ववचनं तस्या विकाराभिमानित्वाद्युज्यते। हिरण्यगर्भस्य वाऽदृश्यत्वादिकं, "स ब्रह्मविद्यां" इत्यादिब्रह्मशब्दात्। न च ब्रह्मशब्दो विष्णौ मुख्य इति तद्ग्रहणम्, तत्परतः पराभिधानात्। रुद्रस्य वैतददृश्यत्वादिलिङ्गजातम्, "कर्तारमीशं" इतीशशब्दश्रवणात्। न चेशशब्दो विष्णावपि सम्भवतीति तद्ग्रहः, तत्परतः पराभिधानादेवेति भावः। एवं प्राप्तं पूर्वपक्षं प्रतिक्षेप्तुं सूत्रं व्याचष्टे— **तमेवमिति**। अदृश्यत्वादिगुणको विष्णुरेव, "अथ परा यया तदक्षरमधिगम्यते" इत्यदृश्यत्वादिगुणकस्य परविद्याविषयत्वोक्तेः, परविद्याविषयत्वस्य च श्रुतिस्मृतिभिर्विष्णुधर्मत्वेनावगतत्वादित्यर्थः। "तमेवं" इति श्रुतौ मोक्षसाधनविद्याविषयत्वोक्त्या विष्णोः परविद्याविषयत्वमुक्तं भवति, मोक्षसाधनविद्यायाः परविद्यात्वात्। "तत्कर्म" इति स्मृतौ च सैव परविद्या, यया हरेर्ज्ञानं भवतीति तस्य परविद्याविषयत्वमुच्यते।

"अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा" इत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥ २१ ॥

## ॥ ओम् विशेषणभेदव्यपदेशाभ्यां च नेतरौ ओम् ॥

यस्सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः ।

इति विशेषणान्न प्रकृतिः ।

तत्त्वप्रकाशिका

"द्वे विद्ये" इत्यत्र च यदा वेदादि अन्यविषयतया योज्यते, तदा तस्यापरविद्यात्वं यदा पुनरेतैस्स हरिर्वेद्यो भवति, तदा परविद्यात्वमिति हरेः परविद्याविषयत्वमुच्यते । तदुक्तं—

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥

इति । यदुक्तं प्रकृतिविरिञ्चयोरदृश्यत्वादिगुणकत्वमिति, तदर्थान्निराकृतमपि विशेषयुक्त्या पराकुर्वन्सूत्रं पठित्वा व्याचष्टे—विशेषणेति । "तपसा चीयते ब्रह्म" इत्यत्राज्ञानप्रतीतौ तन्निरासाय "यस्य ज्ञानमयं तपः" इत्युक्तेऽर्थे हेतुतयाऽदृश्यत्वादिगुणकस्य सार्वज्ञ्यविशेषणोक्तेः नाचेतनप्रकृतेरदृश्यत्वादिगुणकत्वम् ।

तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥

इति भेदव्यपदेशान्न विरिञ्चः ।

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥

इति स्कान्दे त्र्यक्षराभिधानात् "अक्षरात्परतः" इत्यपि विशेषणमेव ।

### तत्त्वप्रकाशिका

तस्मादक्षरादेतद्ब्रह्म चतुर्मुखाख्यं जायत इति वीरञ्चस्य तज्जन्यतया तस्माद्भेदव्यपदेशात् नासावप्यदृश्यत्वादिगुणक इत्यर्थः । ज्ञानवेदनयोः सामान्यविशेषतयाऽर्थान्तरत्वम् । "विद्लृ लाभे विदोत्पत्तौ" इत्यतो वा । न विष्णोरदृश्यत्वादिगुणकत्वम्, परतः पराभिधानेनाक्षरशब्दस्य विष्णौ निरवकाशत्वादित्यतः सूत्रखण्डस्यार्थान्तरमाह— **अपरमिति** । भवेदक्षरश्रुतेः विष्णाववकाशाभावो यदि "अक्षरात्परतः परः" इत्यत्र प्रकृताक्षरमवधीकृत्य कस्यचित्परत्वमुच्येत । नैतदस्ति । किन्तु प्रकृताक्षरस्यैवाक्षरात्परतः परत्वविशेषणमुच्यते । न चाक्षरस्याक्षरात्परतः परत्वं विरुद्धमिति वाच्यम्, त्र्यक्षराभिधानादक्षरान्तरादस्याक्षरस्य परत्वोपपत्तेरिति भावः । ईशशब्दाददृश्यत्वादिगुणको

"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः ॥ २२ ॥

## ॥ ओम् रूपोपन्यासाच्च ओम् ॥ २३ ॥

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । इति ।

"एको नारायण आसीन्न ब्रह्मा न च शङ्करः" "स मुनिर्भूत्वा

---

### तत्त्वप्रकाशिका

रुद्र इत्यस्योत्तरतयाऽपि सूत्रशेषं व्याचष्टे—**जुष्टमिति** । अस्याक्षरस्य "अन्यमीशं" इति प्रसिद्धेशाद्रुद्राद्भेदव्यपदेशान्न रुद्रोऽदृश्यत्वादिगुणक इत्यर्थः । यदपि पृथिव्यादिदृष्टान्तेन जगत्कारणत्ववचनं तत्कारणत्वमात्रतात्पर्यम् । ब्रह्माक्षरेशशब्दास्तु विष्णावेव मुख्याः, बाधकाभावस्योक्तत्वात् ॥ २२ ॥

युक्त्यन्तरेण विष्णोरेवादृश्यत्वादिगुणकत्वं साधयत्सूत्रमुपन्यस्य तदुपात्तश्रुतिमेवोदाहरति—**रूपेति** । द्रष्टा जीवो यदा रुक्मवर्णं हिरण्यगर्भकारणं जगत्कर्तारं पश्यति तदाऽसौ विद्वाननिष्टं पुण्यं पापं च विहाय निर्लेपः पूर्णानन्दत्वादिसाम्यं प्राप्नोतीत्यदृश्यत्वादिगुणकस्य रुक्मरूपोपन्यासाच्चासौ विष्णुरेवेत्यर्थः । ननु ब्रह्मादीनामपि रूपसद्भावात्कुतो रूपोपन्यासेनास्य विष्णुत्वनिश्चय इत्यत आह—**एक इति** ।

समचिन्तयत् तत एते व्यजायन्त । विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य हैतस्य परस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति । स एतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणि व्यमिश्रयत् अत एतादृगेतद्रूपम् " इति तस्यैव हि रूपाण्यभिधीयन्ते ॥ २३ ॥

तत्त्वप्रकाशिका

'विश्वः' वायुः विमिश्राण्येतेभ्योऽभ्यचीक्लृपत्, व्यमिश्रयदिति मानुषादौ विशेषेण मिश्रीचकारेत्यर्थः । स एतानि व्यमिश्रयत् । विमिश्राणि चैतेभ्योऽभ्यचीक्लृपदिति वा । "तस्य हैतस्य" इत्यादेरेवात्रोपयुक्तत्वेऽपि "एतान्येतेभ्यः" "इत्यस्यार्थप्रतीत्यर्थमन्यांशोदाहरणम् । तस्माद्विष्णोरेवादृश्यत्वादिगुणकत्वमिति स एवानन्दमय इति सिद्धम् ॥ २३ ॥

—o—

चन्द्रिका

## ।। ओम् अदृश्यत्वादिगुणको धर्मोक्तेः ओम् ।।

अत्रान्तर्यामिणो ब्रह्मत्वे हेतूकृतस्य ''यं पृथिवी न वेद'' इत्युक्तस्याद्द

प्रकाशः

ओम् अदृश्यत्वादिगुणको धर्मोक्तेः ओम् ।। भाष्ये ''अदृश्यत्वादिगुणा विष्णोरुक्ताः'' इति सामान्येनोक्तेः, तत्त्वप्रदीपे च "-''अदृश्येऽनात्म्ये'' ''सद्दैव सन्तं न विजानन्ति देवाः'' ''स योऽतोऽश्रुतः'' इत्यादिना अदृश्यत्वादिगुणाः विष्णोरुक्ताः" इत्यादिपदप्रयोगात टीकायां ''अदृश्येऽनात्म्ये'' इति विशिष्योक्तावपि तुल्यन्यायतया प्राप्तां "पूर्ववददृश्यत्वादिबलेन रूढिं परित्यज्य योगवृत्त्याऽक्षरशब्दो विष्णौ सम्भवति'' इति न्यायविवरणटीकोक्त्या च लब्धां पूर्वसङ्गतिमाह—अत्रेति । ननु अदृश्यत्वं सामान्यं, पृथिव्यविदितत्वं विशेषः, तेन कथं तदाक्षेप इति, मैवं, सर्वादृश्यत्ववति तदेकदेशपृथिव्यविदितत्वस्यापि ''मुखनासिकावचनोऽनुनासिकः'' इत्यत्र महाभाष्योक्तेन प्रासादवासिन्यायेन सत्त्वाद्वा, पृथिव्याद्यधिदैवादिसर्वाविदितत्वस्य अदृश्यत्वरूपत्वाद्वा, ''सद्दैव सन्तं न विजानन्ति देवाः" इत्यत्रेव कैमुत्यलब्धत्वाद्वा, उभयत्रापि अपरिच्छिन्नवैभवस्य विवक्षितत्वाद्वा तदाक्षेपात् ।। यदत्रोभाष्यामुक्तं—प्राक् प्रधानस्य द्रष्टृत्वाद्ययोगेन निरासेऽपीह तथा बाधकाभावाददृश्यत्वादिकं प्रधानस्य स्यादिति शङ्कोदयात्सङ्गतिरिति, तन्न, साक्षात्सौत्रहेत्वाक्षेपसम्भवेनेदृशस्यानादरणीयत्वादिति

चन्द्रिका

श्यत्वस्याक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः ।

प्रकाशः

भावेनोक्तं — **ब्रह्मत्वे हेतूकृतस्येति** । एतेनैव प्राक् हेतूकृतेन अदृश्यत्वरूपब्रह्मधर्मेण ब्रह्म किं नाक्षरशब्देनोच्यते इत्याशङ्काया अप्यनवकाशः । "अदृश्येऽनात्म्ये" इत्यादिटीकादि तु फलपरमिति भावः । ननु पूर्वं तद्धर्माभिलापाभावेन प्रधाननिरासेऽपि नेह तथा, पृथिव्यादिदृष्टान्तपूर्वं विश्वोपादानत्वरूपतद्धर्माभिलापादिति वा, पूर्वत्र अविदितत्वरूपादृश्यत्वादिबाधकेन शरीरशब्दे रूढित्यागवदत्र अक्षर-शब्दे नादृश्यत्वादिलिङ्गेन रूढित्यागः, "अक्षरात्परः परः" इत्युत्कर्षावधित्वश्रवणादिति वा पूर्ववैषम्येणापि सङ्गतिरस्तीति चेत्, सत्यं, प्रधानहेत्वाक्षेपसम्भवे तस्यैव वाच्यत्वात्, सिद्धान्तशङ्काबी-जनिरासार्थत्वाच्च पूर्वहेत्वाक्षेप एवोक्तः । विषयसंशयटीकां व्यनक्ति— **अत्रेति** । टीकायामेव अपेक्षितसमग्रविषयवाक्यं व्यक्तम् । यद्यपि गुणजातमेवात्र विषयः, लिङ्गपादत्वात्, टीकायां तथैवोक्तेश्च । तथाऽप्यक्षरस्य विशेष्यत्वात्तस्य चोपादानत्वात् न ब्रह्मेति पूर्वपक्षयुक्तिं सूचयितुं तथोक्तम् । अत एव टीकायां अक्षरशब्द-साहित्येन अन्यत्र प्रसिद्धिरदृश्यत्वादिलिङ्गानामुक्ता । नन्वेवमक्षर-नामैव समन्वीयताम् । पादसङ्गतिस्तु उत्तराधिकरण इव अनेकलिङ्ग-समन्वयार्थत्वात् फलतो भविष्यति । उपादानत्वादक्षरं न ब्रह्मेति पूर्वपक्षश्च ऋजुः । उपादानत्वादक्षरस्यान्यत्वेन तद्विशेषणत्वात् गुण-

चन्द्रिका

अत्राद्दश्यत्वादिगुणकमक्षरं किं प्रकृत्यादि किं वा विष्णुरिति चिन्ता । तदर्थं ब्रह्मणोऽक्षरत्वे "अक्षरात्परतः परः" इति वाक्यशेषोक्त अक्षरस्य परत्वावधित्वं न सम्भवति उत सम्भवतीति । तदर्थं परत्वावधिभूतमक्षरमदृश्यत्वादिगुणकाक्षरादनन्यत् उतान्यदिति ।

प्रकाशः

जातमप्यन्यस्येति पूर्वपक्षस्तु वक्र इति चेन्न, अक्षरशब्दसमन्वयस्याप्यक्षराधिकरणे सेत्स्यमानत्वात् । न च तेनैवेदं गतार्थं, परत्वावधित्वादिना बाधकेन तस्येहापवादेन पूर्वपक्षकरणात् । अन्यत्रासमन्वितगुणजातसमन्वयस्यैवेह कार्यत्वात् । अस्मिन् पादे अन्यसाहित्येनैव अन्यत्रप्रसिद्धेराश्रितत्वात्, गुणसमन्वये च पूर्वसङ्गतेः साक्षाल्लाभाच्च गुणजातमेवात्र चिन्तितम् । प्रकृत्यादीति । चिदचित्प्रकृतिविरिञ्चिरुद्रा इत्यर्थः । यद्यप्यत्र टीकायां "अक्षरात्सम्भवतीह विश्वम्" इति कारणवाक्यस्याक्षरब्रह्मशब्दानां विष्णाववकाशमाशङ्क्य परत्वावधित्वश्रवणेनोज्जीवनात्, तदनुरोधेन विष्णुरिति चिन्तानन्तरं कारणवाक्यस्थाक्षरब्रह्मेशशब्दाः किं प्रकृत्यादिपरा अथ विष्णुपरा इति चिन्ता प्रदर्शनीया । तथाऽपि तुल्यन्यायतया सा चिन्ता स्पष्टेति वा, वाक्यशेषस्थाक्षरस्य परत्वावधित्वेन निकृष्टत्वे तदनन्यप्राचीनाक्षरस्यापि न ब्रह्मत्वमिति हेतुहेतुमद्भावस्येव प्राचीनकारणवाक्यस्थब्रह्मेशशब्दयोः न ब्रह्मपरत्वमित्यत्र स्पष्टं हेतुहेतुमद्भावाप्रतीतेरक्षरस्यापि अब्रह्मत्वात्तदुक्तकारणवाक्यस्य तत्समानाधिकरण-

चन्द्रिका

अनन्यत्वे परत्वावधित्वस्य ब्रह्मण्ययोगात् न तस्याक्षरत्वं युक्तं, अन्यत्वे तु युक्तम् ॥

पूर्वपक्षस्तु— जडप्रकृतेरेवादृश्यत्वादि,

प्रकाशः

ब्रह्मेशशब्दयोरपि न ब्रह्मपरत्वमिति अक्षरस्य अब्रह्मत्वद्वारैव कारणवाक्यादेरब्रह्मपरत्वोक्त्यवश्यम्भावाद्वा, सङ्गतिभाष्यन्यायविवरण-तट्टीकानुरोधाद्वा अक्षरमुखेव चिन्तोपदर्शिता । फलफलिभाव-मस्फुटत्वादाह— **अनन्यत्व इति ।** यदि वक्ष्यमाणदिशा प्रकृत-हानाप्रकृतकल्पनादोषापत्त्या "अक्षरात्परतः" इत्युक्ताक्षरस्य "अक्षरा-त्सम्भवतीह विश्वम्" इति पूर्वोक्तस्य चाक्षरस्यैकत्वं, तदा अदृश्य-त्वादिगुणकस्य विश्वकारणत्वेनोक्तस्यैव परत्वावधित्वात् तस्य च सर्वोत्तमे विष्णावयोगात्, यथायथं प्रकृत्यादीति पूर्वपक्षे फलम्, यदा तु "अक्षरत्रयमीरितम्" इति वक्ष्यमाणरीत्या अन्यत्वं, तदा "अक्षरात्परतः" इत्युक्ताक्षरस्यापरत्वात् परत्वावधित्वस्य ब्रह्मण्य-भावात्, परविद्याविषयत्वेन विष्णुरेवेति सिद्धान्ते फलमित्यर्थः । उपादानत्वाक्षरब्रह्मेशशब्दान् क्रमेण प्रधानश्रीब्रह्मरुद्रप्रापकान् टीकोक्तान् व्यञ्जयन् चतुर्विधपूर्वपक्षटीकां व्यनक्ति —**जडप्रकृतेरेवेत्यादिना ।** ननु अत्र निर्धारित एक एवादृश्यत्वादिगुणक इति पूर्वपक्षः, उत अनिर्धारितो यः कश्चिदिति, सर्वेऽपीति वा । नाद्यः, अनेकप्रापकसत्त्वेन निर्धारणायोगात् । न द्वितीयः, संशयादविशेषापत्तेः ।

चन्द्रिका

अदृश्यत्वादिगुणकेऽक्षरे पृथिव्यादिदृष्टान्तपूर्वकं "तथाऽक्षरात्सम्भवतीह विश्वम्" इति विश्वोपादानत्वोक्तेः ।

प्रकाशः

न तृतीयः, वाक्यभेदापातादिति चेन्न, अक्षरब्रह्मेशशब्दानां अन्यप्रापकाणां अविनाशित्वेन "मम योनिर्महद्ब्रह्म" इत्यादिवचनेन कार्यस्य कारणाधीनतयेशितृत्वेन प्रधान एवोपपत्तेरित्यादिरूपेण पक्षचतुष्टयेऽप्यवधारणसम्भवेन आद्यस्य युक्तत्वादिति भावेन—प्रकृतेरेवेत्युक्तम् । "चित्प्रकृतेर्वा" इत्यादिवाशब्दात् द्वितीयतृतीयावपि युक्ताविति सूचितम् । द्वितीये विष्ण्वन्यत्वेन अवधारणसम्भवात् न सन्देहादविशेषः । अत एव टीकायां "विष्णोरन्यस्य" इति संशयोक्तिः, "न विष्णोरदृश्यत्वादीति तावत्पूर्वपक्षः" इत्युक्तिः, "न विष्णुरदृश्यत्वादिगुणकः" इत्युपसंहारश्च । तृतीये वाक्यभेदस्य न्यायप्राप्तत्वादिति । यद्वा —"न विष्णोरदृश्यत्वादि" इति टीकोक्तव्यवच्छेद्याभिप्रायं जडप्रकृतेरेवेत्यवधारणं, न तु कोट्यन्तरव्यवच्छेदाशयम् । तेन "न विष्णोरदृश्यत्वादि" इति टीकोक्तस्य "अदृश्यत्वादिकं जडप्रकृतेर्भवेत्" इति टीकोक्तस्य च सङ्ग्रहः कृतो भवति । तेन विष्णोर्न चेन्निर्विषयतया वाक्यमिदममानं स्यादिति शङ्का च निरस्ता भवति । "अस्य पृथिव्यादिदृष्टान्तेनोपादानतया जगत्कारणत्वोक्तेः इति टीकां व्यनक्ति— अदृश्यत्वेति । 'दृष्टान्ते' इत्येतदुपादानत्वसिध्यर्थमुक्तम् । ऊर्णनाभेरादित्वेऽपि

चन्द्रिका

न च कारणत्वमात्रेऽयं दृष्टान्तः, तस्य "सम्भवतीह विश्वम्" इत्यनेनैव सिद्ध्या दृष्टान्तवैयर्थ्यात् । अबाधेऽन्तरङ्गस्योपादानत्वस्य त्यागायोगाच्च । चित्प्रकृतेर्वाऽदृश्यत्वादिकं, तत्राक्षरशब्दस्य "कूट-स्थोऽक्षरउच्यते" इत्यादिस्मृतिसिद्धत्वात् । न चाक्षराधिकरण न्यायेन ब्रह्मणि स सावकाश इति वाच्यं, विश्वोपादानत्वस्य तत्र

प्रकाशः

'पृथिव्यादि' इत्युक्तेर्गतिर्विवक्ष्यते । उपादानत्वमेव शङ्कापूर्वं व्यनक्ति— **न चेति** । 'तस्य' कारणत्वमात्रस्य । **अन्तरङ्गस्येति** । कार्यानु-स्यूतत्वादुपादानस्येति भावः । एतेन टीकायामेवमाशङ्क्य, तथाऽक्षर-ब्रह्मेशशब्दानां च विष्णाववकाशमाशङ्क्य सर्वत्र परतः पराभि धानेनैवोज्जीवनं यत्कृतं तदुपलक्षणमिति सूचितम् । तथा च वक्ष्यति "इति निकृष्टत्वेन श्रुतत्वाच्च" इति । "चेतनप्रकृतेर्वा" इत्यादिटीकां व्यनक्ति— **चित्प्रकृतेर्वेति** । **अक्षराधिकरणन्याये-नेति** । "अक्षरमम्बरान्तधृतेः" इत्यत्र "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति श्रुतमक्षरं किं चित्प्रकृतिरथ विष्णुरिति संशये, "ये त्वक्षरमनिर्देश्यमव्यक्तं" इत्यादौ श्रीतत्त्वे अक्षरशब्दप्रयोगात्, क्षराक्षरातीते विष्णौ तदयोगात् श्रीतत्त्व-मेवेति प्राप्ते, चतुर्विधनाशरहिते विष्णावेव अक्षरशब्दप्रवृत्ति निमित्तस्य पौष्कल्यात्, "तस्मादक्षरं तस्मादक्षरमित्याचक्षते एतमेव सन्तं" इति श्रुत्यादौ तस्य प्रयोगाच्च विष्णुरेव अक्षरशब्द-

चन्द्रिका

असम्भवात् चित्प्रकृतौ तु विश्वोपादानाभिमानित्वेन तत्सम्भवात् । चतुर्मुखो वाऽदृश्यत्वादिगुणकः, "स ब्रह्मविद्यां" इति ब्रह्मशब्दात् । न च विष्णौ स मुख्य इति वाच्यं, पूर्वत्र "ब्रह्मा देवानां प्रथमः सम्बभूव" इति, उत्तरत्र च

तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ।

इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन सन्दष्टस्य "स ब्रह्मविद्यां" इति ब्रह्मशब्दस्य अन्यपरत्वायोगात् ।

प्रकाशः

मुख्यार्थ इति तृतीयपादे वक्ष्यमाणन्यायेनेत्यर्थः । निर्विकारे श्रीतत्त्वेऽपि कथमुपादानत्वमित्यतः "तस्या विकाराभिमानित्वाद्युज्यते" इति टीकोक्तमेव व्यक्तमाह—**चित्प्रकृतौ त्विति** । "हिरण्यगर्भस्य वा" इत्यादिटीकां व्यनक्ति—**चतुर्मुखो वेति** । **स ब्रह्मेति** ।

ब्रह्मा देवानां प्रथमस्सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।

स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥

इति वाक्ये ब्रह्मशब्दादित्यर्थः । तस्य चतुर्मुखपरत्व एवैतद्विद्यायास्तत्परत्वमित्यतस्तत्साधयति—**न चेत्यादिना** । **पूर्वत्रेति** । अत एव तत्त्वप्रदीपे "ब्रह्मा देवानां" इति पूर्ववाक्यमप्युदाहृतमिति भावः । **जायमानत्वेति** । 'सम्बभूव जायते' इति च पदाभ्यामुक्तेनेत्यर्थः । उपादानत्वं च तदभिमानित्वेनेति भावः । एव-

चन्द्रिका

रुद्रो वाऽदृश्यत्वादिगुणकः, "कर्तारमीशं" इति ईशशब्दात्। न च "शब्दादेव प्रमितः" इति वक्ष्यमाणन्यायेन स विष्णुपर

प्रकाशः

मप्रेऽपि। "रुद्रस्य" इत्यादिटीकां व्यनक्ति—रुद्रो वेति। ईशशब्दादिति। प्रकृतादृश्यत्वादिगुणकाक्षर एव "यदा पश्यःपश्यते रुक्मवर्णं कर्तारमीशं" इत्युत्तरवाक्ये श्रुतत्वादित्यर्थः। शब्दादेवेति। अत्रैव तृतीयपादे "ईशानो भूतभव्यस्य" इति श्रुत ईशानो वायुरुत विष्णुरिति सन्देहे, "ऊर्ध्वं प्राणमुन्नयति" इति प्राणव्यवस्थापकत्वस्य, "मध्ये वामनमासीनं" इति मध्यमत्वस्य, "विश्वेदेवा उपासते" इति विश्वदेवोपास्यत्वस्य च श्रवणात्तेषां च 'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते" "योऽयं मध्यमः प्राणः" "कुविविन्दङ्ग" इति श्रुतिभिर्वायुधर्मत्वाद्वायुरिति प्राप्ते, लिङ्गसहस्रादपि श्रुतेर्बलवत्त्वात् निरवकाशवामनश्रुत्या ईशानपदप्रवृत्तिनिमित्तस्य प्रेरकत्वादेर्विष्णावेव पौष्कल्यादीशानो विष्णुरेवेति वक्ष्यते, ईशशब्दस्य चेशानशब्दपर्यायत्वादिति भावः। यद्यपि "सर्वत्र" इति नये, "अत्ता" इति नये च आदित्यादितिश्रुत्योरिवान्तर्नन्ययायेनेशशब्दस्यापि सावकाशत्वशङ्का सुशका। तथाऽपि तदधिकरणविषयवाक्ये ईशशब्दस्य तत्पर्यायस्य वा श्रवणाभावाद्वा, तत्रैव अत्र वाक्ये निरवकाशविष्णुलिङ्गाभावेन तन्न्यायाविषयत्वाद्वा, तत्र तात्पर्यमात्रमेवाधिदैवगतशब्दानामुक्तं, न तु शक्ति-

चन्द्रिका

इति वाच्यं, रुद्रे प्रसिद्धसर्वज्ञशब्दात् । न चासौ यौगिकत्वेन प्रकृताक्षरस्य विशेषणं, न तु रुद्राख्यविशेष्यपर इति वाच्यं, रूढेर्बलवत्त्वात् । "सर्ववित्" इत्यनेन पुनरुक्तेश्च । तस्मादुक्त-बाधकात् "अक्षरात्परतः परः" इति निकृष्टत्वेन श्रुतत्वाच्चाक्षरं न

प्रकाशः

रपीति भावेन वा. 'शब्दादेव" इत्यत्रेशशब्दपर्यायस्येशान-शब्दस्य साक्षादेव समन्वयोक्तेर्वा—**शब्दादेव प्रमितः" इति वक्ष्यमाणन्यायेनेत्युक्तम् । प्रसिद्धेति ।**

यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।

तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥

इति श्रुतसर्वज्ञशब्दात्, तस्य च

कृशानुरेतास्सर्वज्ञो धूर्जटिर्नीललोहितः ।

इत्यमरोक्त्या रुद्रे प्रसिद्धत्वादित्यर्थः । यौगिकत्वे दोषमाह—**सर्वविदिति** । प्रातिस्विकबाधकोक्त्या अन्यप्रापकाणां निरवकाश-त्वमुक्त्वा टीकायुक्तेन साधारणबाधकान्तरेणापि तदाह—**अक्षरा-दिति** । यद्यपि टीकायां कारणत्वस्य अक्षरब्रह्मेशशब्दानां च सावकाशत्वमाशङ्क्य, "अक्षरात्परतः परः" इतिश्रुतनिकृष्टत्वेनैव तेषां निरवकाशत्वमुक्तं, न तु दृष्टान्तोक्तविश्वोपादानत्वादिना । तथाऽपि सति बाधके त्यागायोगात्—"अक्षरात्परतः" इति श्रुतेरपि" इति न्यायविवरणगतापिशब्दस्य बाधकान्तरसमुच्चयार्थत्वमुपेत्य

चन्द्रिका

ब्रह्म । न च "तथाऽक्षरात्" इत्यादावेवाक्षरशब्दो ब्रह्मपरः, "अक्षरात्परतः परः" इत्यत्र तु प्रकृतिपर इति वाच्यं, प्रकृतहानाप्रकृतस्वीकारापातात् । पूर्वपक्षे त्विदं निकृष्टत्वं चित्प्रकृतिपक्षे 'अक्षरात्परतः' इति पञ्चम्योस्सामानाधिकरण्येन, पक्षान्तरे तु वैयधिकरण्येन युक्तम् । न चाब्रह्मपक्षे परविद्याविषयत्वं

प्रकाशः

प्रातिस्विकबाधकोक्त्या च निरवकाशत्वमुक्तमिति ज्ञेयम् । अन्यचिन्तास्थानन्यवकोटिं साधयितुं निकृष्टत्वेन श्रुतत्वं शङ्कापूर्वं साधयति—न चेति । विष्णोरिव पूर्वपक्षकोटीनामपि निकृष्टत्वेन श्रुतत्वमयुक्तं, श्रीतत्त्वापेक्षया विष्णोरर्वागन्यस्य अभावात्, तत्र सामानाधिकरण्येनान्वये चतुर्मुखादावयोगादित्यतः, "तस्यां सामानाधिकरण्येनोपपन्नं" इति टीकोपलक्षणमिति भावेन "तस्मात्परस्याः प्रकृतेः परस्य हरेरभिधानादेव" इति तत्त्वप्रदीपोक्तं हृदि कृत्वा सर्वत्र तदुपपत्तिमाह....**पूर्वपक्ष इति । पक्षान्तरे त्विति** । 'अक्षरात्' चतुर्मुखात् 'परतः' श्रीतत्त्वात्पर इति चतुर्मुखपक्षे, रुद्रपक्षे तु 'अक्षरात्' रुद्रात् 'परतः' चतुर्मुखात् पर इति पुम्मात्रविवक्षया ध्येयमिति भावः । ननु यथा सिद्धान्ते निकृष्टत्वश्रवणं बाधकं तथा पूर्वपक्षेऽपि परविद्याविषयत्वं बाधकमित्याशङ्क्य, "यदा वेदादि अन्यविषयतया योज्यते, तदा तस्यापरविद्यात्वं" इत्यादिसिद्धान्तटीकाव्याख्यावसरे च परापरविद्ययोः भिन्नार्थत्वमुपेत्याह **न चेति** । ऋगादिविषयत्वोपपा-

चन्द्रिका

बाधकं, "परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः" इत्यपरविद्यात्वेनोक्तऋगादिविषये शास्त्रयोनौ ब्रह्मण्येव तत्प्रतियोगिभूतपरविद्याविषयत्वासम्भवात् । "अथ परा यया तदक्षरमधिगम्यते" इति श्रुत्या प्रकृतेरेव तत्सम्भवाच्च ॥

प्रकाशः

दनाय 'शास्त्रयोनौ' इत्युक्तम्, शास्त्रयोनिसूत्रे तथोक्तत्वादिति भावः । **प्रतियोगीति** । विरोधीत्यर्थः । **प्रकृतेरिति** । प्रकृत्यादेरेवेत्यर्थः । ननु "अक्षरात्परतः परः" इति वाक्योक्तपरत्वम्तु किञ्चिदुपेत्य अत्र प्रकृत्यादिरिति पूर्वपक्षकरणे,

चित्त्वे तु तेन कार्त्स्न्येनावेद्यत्वं नेश्वरं विना ।

इति प्रागुक्तदिशा अपरिच्छिन्नवैभवत्वपर्यवसन्नं मुख्यमदृश्यत्वं निकृष्टत्वेनाभ्युपेते प्रकृत्यादौ पूर्वपक्षिणा शङ्कितुमशक्यमिति कथमेतादृशस्य आनन्दमयादावुक्तस्य विष्णुधर्मस्य पूर्वपक्षे आक्षेपः स्यात् । न चात्र श्रुतनिकृष्टत्वस्य परत्वस्य च अक्षरत्वेनाभिमते प्रकृत्यादावेव कथञ्चिदुपपन्नताऽभिप्रेतेति ईश्वरपरत्वमेव नोपेयते पूर्वपक्षिणेति वाच्यं, तथात्वे पूर्वत्र निर्णीतादृश्यत्वरूपविष्णुलिङ्गेन अक्षरस्य विष्णुत्वमेवोपेत्य परापरत्वोपपत्तिरुच्यताम् । न च 'अक्षरात्" इत्यादिना श्रुतोपादानत्वादिना विष्णुनिरासेन प्रकृत्यादिरुच्यत इति वाच्यं, टीकायां परत्वावधित्वबाधकबलेन पूर्वपक्षप्रापकाणां निरवकाशत्वोक्तेरिति चेन्मैवं, अदृश्यत्वं चक्षुरगोचरत्वमित्युपेत्य "अदृश्येऽनात्म्ये"

चन्द्रिका

सिद्धान्तस्तु—परविद्याविषयत्वं तावद्भाष्योक्तश्रुत्यादिभिर्विष्णोरेव ।

प्रकाशः

इत्युक्तादृश्यत्वस्यापि प्रकृत्यादावाशङ्कनात् । पूर्वाक्षेपचन्द्रिकास्त्वर्थान्तराभिप्राया । न चैवमपि ब्रह्मरुद्रयोर्जीवत्वेन "अचक्षुश्श्रोत्रं तदपाणिपादं" इत्युक्तजीवधर्मभूतचक्षुरादिराहित्यं कथं घटतां येन "अदृश्येऽनात्म्ये" इत्यनात्म्यपदोक्तस्य जीवगुणराहित्यस्य टीकोक्त आक्षेप उपपद्येतेति वाच्यं, तयोर्जीवत्वमेव नेतीति वा, जीवोत्तमत्वेनेतरजीववैलक्षण्येन वा तदुपपत्तिरित्याशयादिति ।

"धर्मोक्तेः" इति सूत्रोपात्तनिरवकाशपरविद्याविषयत्वरूपभगवल्लिङ्गादिनाऽन्यप्रापकाणां सावकाशत्वात्, "अक्षरात्परतः" इत्युक्ताक्षरस्यान्यत्वेन बाधकाभावाच्च विष्णुरेवादृश्यत्वादिगुणकं अक्षरमिति भावेन, लिङ्गनिरवकाशत्वं तावत् "परविद्याविषयत्वस्य श्रुतिस्मृतिभिर्विष्णुधर्मत्वेनावगतत्वात्" इति टीकोक्तं व्यनक्ति—**परविद्येति** । "अथ परा यया तदक्षरमधिगम्यते" इत्युक्तमित्यर्थः । मोक्षसाधनविद्याया एव परविद्यात्वात्, तद्विषयत्वस्य च "तमेवं विद्वानमृत इह भवति"

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।

"द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यङ्गानि यानि प्रत्यङ्गानि सा परा । अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा" इत्यादिभिर्विष्णो-

चन्द्रिका

युक्तं च ऋगादिवेद्यस्यापि विष्णोः परविद्याविषयत्वं, यतः,

प्रवृत्तं च निवृत्तं च यथैकं कर्म कथ्यते ।
उपाधिभेदाद्विद्याऽपि तथैवैका पराऽपरा ॥

यथैकमेव कर्म निष्कामज्ञानपूर्वकत्वोपाधिना निवृत्तं, सकामत्वाद्युपाधिना च प्रवृत्तम् ,

निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ।

इत्यादिस्मृतेः, यथा चैकमेवान्नमुपाधिभेदात् पथ्यमपथ्यं च, तथा ऋगादिरूपैकैव विद्या सन्न्यायैः प्रमितब्रह्मविषयकशक्तितात्पर्यौपा-

प्रकाशः

रेव सिद्धमित्यर्थः । ननूक्तमपरविद्याविषयस्य परविद्याविषयत्वमयुक्तमित्यतो "—"द्वे विद्ये वेदितव्ये" इत्यत्र च " इत्यादिटीकां विवृण्वन्नाह—युक्तं चेति । कुत इत्यतः, ऋगादेरेव परविद्यात्वादिति भावेनाह—यत इति । श्लोकेनान्वयः । 'अतः' इति योज्यम् । पूर्वार्धं व्यनक्ति—यथेति ।

निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥

इति व्यासस्मृतेरित्यर्थः । स्वर्गादिफलकामनां विनेत्यर्थः । 'कर्म' इत्युपलक्षणं श्लोक इति भावेनाह— यथा चेति । उत्तरार्धं स्पष्टयति—तथेति । सन्न्यायैरिति । बलाबलवत्त्वादिना सम्यगवधृतोपक्रमादिभिरित्यर्थः । प्रमितेति । नित्यसापेक्षत्वात्समासः ।

चन्द्रिका

विना परा, मोक्षसाधनप्रमाहेतुत्वात् , अन्यथा त्वपरा, तदहेतुत्वात् । तदुक्तम्—

ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।
ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥

इति । यत्त्वन्यैरुक्तं परशब्द ऋगादिविशेषरूपोपनिषत्परः, तत्सन्निधानाच्चापरशब्दो गोबलीवर्दन्यायेनोपनिषदितरऋगादिपर इति, तन्न, "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभिर्ब्रह्मणः सर्ववेदवेद्यत्वात् । उपनिषत्स्वपि ज्ञेयशुद्धब्रह्मविषयाणां उपासनादिवाक्यानां बहूनां, मन्त्रेष्वपि ज्योतिरधिकरणोक्तन्यायेन ब्रह्मपरभागस्य च दर्शनाच्च । 'रूपं द्विविधं नीलमनीलं च' इति वत् , "द्वे विद्ये परा चैवापरा च" इत्यत्र परापरशब्दयोर्विरुद्धार्थत्वप्रतीतेश्च । न हि नीलपदमनीलविशेषपरं भवति ।

प्रकाशः

**तदुक्तमिति** । आथर्वणभाष्ये । स्वमते परापरविद्यात्वमुपाधिभेदेनैकत्रैव टीकाद्युक्तं व्युत्पाद्य, प्रसङ्गात् परभाष्याद्युक्तिमनूद्य निराह—**यत्त्विति** । ननु ऋगादीनां कर्मबोधकत्वात् कथं ब्रह्मपरतेति चेत् , किमेकदेशस्यान्यपरत्वं उत कृत्स्नस्य । आद्य आह—**उपनिषत्स्वपीति** । द्वितीय आह—**मन्त्रेष्वपीति** । "ज्योतिश्चरणाभिधानात्" इत्यत्र स्वप्रदर्शितन्यायेनेत्यर्थः । परापरशब्दयोर्विशेषसामान्यभावेन अर्थवर्णनमयुक्तमित्याह—**रूपमिति** । 'द्वे विद्ये वेदितव्ये' ब्रह्म-

चन्द्रिका

यत्तु कैश्चिदुक्तं—परोक्षज्ञानमपरविद्या, भक्तिरूपमपरोक्षज्ञानं तु परविद्येति, तन्न, श्रुतौ ऋगादीनामपरविद्यात्वेनोक्तत्वात्, "यया तदक्षरमधिगम्यते" इति,

येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।

इति च ज्ञानकरणस्यैव परविद्यात्वेनोक्तत्वाच्चेह विद्याशब्दस्य ज्ञानार्थत्वायोगात् । न च 'अधिगम्यते' इत्यस्य प्राप्यत इत्यर्थः, अधिपूर्वस्य गमेर्ज्ञाने प्रसिद्धेः । यद्यपि "व्रजयजोर्भावे क्यप्" इत्यनेन सूत्रेण भावे क्यप्प्रत्ययो विहितः । तथाऽपि "संज्ञायां समजनिषदनिपतमनविद" इति सूत्रे वृत्तौ

प्रकाशः

विषये परोक्षापरोक्षरूपे द्वे ज्ञाने उपादेये इत्यर्थ इति रामानुजभाष्योक्तमनूद्य प्रत्याह- यत्त्विति । विद्याशब्दस्य ज्ञानार्थत्वसम्भवेऽपि इह तद्ग्रहणमयुक्तमित्याह—ययेति । 'यया' विद्यया 'अधिगम्यते' प्राप्यत इत्यर्थसम्भवान्न ज्ञानकरणमिह विद्याशब्दार्थ इत्यत आह—न चेति । ननु "व्रजयजोर्भावे क्यप्" इति पूर्वसूत्रादनुवृत्तस्य भावार्थकस्यैव क्यपः "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इति सूत्रे विहितत्वात्,

तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ।

आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥

इति पराशरवचने प्रयोगाच्च ज्ञानमेव विद्याशब्दार्थ इत्याशङ्क्याह—यद्यपीति ।

चन्द्रिका

'भाव इति न स्वर्यते' इत्युक्तत्वात्, समजन्ति तस्यामिति समज्या, निषीदन्ति तस्यामिति निषद्येति समज्यादिशब्दानां भावार्थत्वाभावस्योक्तत्वाच्च क्यबन्तोऽपि विद्याशब्दो वेदनकरणेऽपि मुख्य एव ।

प्रकाशः

**भाव इतीति ।** "व्रजयजोर्भावे" इत्यव्यवहितं भावपदं न स्वर्यते, व्यवहितं त्वनुवर्त्यत इति भावः । तथा च—'भावे अकर्तरि च कारके संज्ञायां' इत्येतत् "कृत्यल्युटो बहुलं" इति सूत्रपर्यन्तमनुवर्तते । एवं चेह 'भावे' इत्यनुवर्तमाने "व्रजयजोर्भावे" इति पुनर्भावग्रहणं 'अकर्तरि च कारके' इत्यस्य व्यावर्तनेन भाव एव यथा स्यादित्येवमर्थम् । अस्य च भावपदस्य 'संज्ञायां' इत्यत्र अनुवृत्तौ हि विद्याशब्दो ज्ञान एव मुख्यः स्यात् । तत्तु 'न स्वर्यते' स्वरितत्वेन नोच्चार्यते नानुवर्त्यत इत्युक्तत्वात् "संज्ञायां समजनिषद" इति सूत्रे क्यबेवानुवर्तते । न तु 'अकर्तरि च कारके' इत्येतद्व्यावर्तकं 'भावे' इत्येतत् पदं, स्वरितत्वाभावेन "स्वरितेनाधिकारः" इत्युक्तस्वरितनिबन्धनाधिकारशब्दितानुवृत्तेरयोगात् । उत्तरत्र "कृत्यल्युटः" इति सूत्रपर्यन्तं सामान्यतोऽनुवर्तमाने भावे कर्तृव्यतिरिक्तकारके च क्यपो विधानात्, वेदनरूपभाव इव वेदनकरणेऽपि मुख्य एवेत्यर्थः । उक्तं च प्रक्रियाप्रसादेऽपि "अनन्तरभावग्रहणं न स्वर्यते । तेन भावादावर्थे" इति । अत एवोक्तं सुधायां जिज्ञा-

चन्द्रिका

आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥

इति पराशरवचनं तु आगमोत्थत्वविवेकोत्थत्वाभ्यां ज्ञानस्य द्वैविध्यमाह, न त्वत्रत्यपरापरशब्दयोः परोक्षापरोक्षज्ञानार्थताम् । ऊर्णनाभ्यादिरपि निमित्तमेवेत्यन्यत्रोक्तम् । "स ब्रह्मविद्यां" इत्यत्र च ब्रह्मशब्दो न चतुर्मुखपरः, "सर्वविद्याप्रतिष्ठां येनाक्षरं पुरुषं वेद सत्यम्" इति परविद्याविषयत्वादिब्रह्मलिङ्गात् । यच्चोक्तं

प्रकाशः

सानये—"यथार्थज्ञानतत्साधनयोर्विद्याशब्दस्य योगरूढिभ्यां प्रवृत्तत्वात्" इति । पराशरवचनस्य गतमाह—**आगमोत्थमिति** । **परोक्षेति** । यथायोग्यमन्वयः । एवं परविद्याविषयत्वमन्यत्र अनवकाशतया समर्थ्य प्रसङ्गात्परोक्तं च व्युदस्येदानीं पूर्वपक्षप्रापकाणां क्रमेण सावकाशत्वमाह—**ऊर्णनाभ्यादिरिति** । 'अन्यत्र' प्रकृत्यधिकरणानुव्याख्यानादौ । तथा च तद्बलात् "अक्षरात्सम्भवति" इत्यत्र पञ्चम्या नोपादानत्वमर्थः, किं तु निमित्तत्वमेवेत्यर्थः । एतेनोपादानत्वरूपबाधकाभावेन अक्षरशब्दोऽक्षराधिकरणन्यायेन सावकाश इति न चित्प्रकृतिरिति पक्षोऽपि युज्यत इति सिद्धत्वान्नोक्तम् । चतुर्मुखप्रापकं सावकाशयति—**स इति** । आदिपदेन सार्वज्ञ्यादिलिङ्गं गृह्यते । यदपि रुद्रप्रापकेशशब्दोपोद्बलकं सर्वज्ञपदमिति, तत्राह—**यच्चेति** ॥ "यस्सर्वज्ञः" इत्यस्योत्तरार्धं

**तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ।**

चन्द्रिका

सर्वज्ञपदं रुद्राख्यविशेष्यपरमिति, तन्न, तस्य चतुर्मुखजन्यतया तज्जनकत्वायोगात्। किन्तु प्रकृतस्याक्षरस्य सर्वज्ञत्वविशेषणपरम्। अत एव सूत्र विशेषणपदम्। 'सर्ववित्' इत्यनेन पौनरुक्त्यं च टीकायामेव त्रेधा परिहृतम्।

प्रकाशः

इति चतुर्मुखजनकत्वश्रवणात्, तस्य च रुद्रे अनुपपत्तेरित्याह— **तस्येति**।

ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजस्स्मृतः।

इत्याद्याथर्वणभाष्योक्तस्मृतेरिति भावः। **प्रकृतस्येति**। विश्वहेतुतया प्रकृतस्येत्यर्थः। **सूत्र इति**। "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" इति सूत्रे सार्वज्ञ्यविशेषणादित्युक्तमित्यर्थः। ननु यौगिकत्वे 'सर्ववित्' इत्यनेन पुरुनक्ततोक्तेत्यत आह— **सर्वविदिति**। **त्रेधेति**। सामान्यविशेषतया वा, सर्वं विन्दति लभत इति वा, सर्वमुत्पादयतीत्युत्पत्त्यर्थकत्वेन वा विदिधातुर्नेय इत्युक्तमित्यर्थः। अत्र रामानुजभाष्कादौ "विशेषणभेद" इति हेतुद्वयस्य प्रत्येकं प्रधानादिमात्रनिरासकत्वमुपेत्यैकैकस्य प्रधानादिमात्रनिरासकत्ववर्णनं दूषितम्। भाष्ये तु 'विशेषणात्' इत्यस्य प्रधानामात्रव्यावर्तकत्वं, भेदव्यपदेशस्य ब्रह्मरुद्रमात्रनिषेधकत्वमुक्तम्। तत्र परोक्तदूषणालम्भतां वक्तुं अक्षरस्य सर्वज्ञत्वविशेषणे किं लब्धमित्यतः प्रवृत्त "—

यः सर्वज्ञ. सर्वविद्यस्य ज्ञानमयं तपः।

चन्द्रिका

यद्यपि सर्वज्ञत्वविशेषणं चित्प्रकृतिचतुर्मुखरुद्राणां अक्षरत्वनिषेधेऽपि हेतूकर्तुं शक्यं, विष्णोरन्यस्य मुख्यसार्वज्ञ्याभावात् । तथाऽपि चित्प्रकृत्यादीनामक्षरत्वे विश्वकर्तृत्वेन सर्वज्ञत्वस्यापि शक्यशङ्कत्वात्, श्रुतेरमुख्यसार्वज्ञ्यविषयत्वसम्भवाच्च जडप्रकृतिमात्रनिषेधे भाष्ये हेतूकृतम् । यद्यपि च भेदव्यपदेशः चित्प्रकृतिनिषेधेऽपि हेतूकर्तुं शक्यः, "अक्षरात्परतः परः" इति चित्प्रकृतितोऽपि भेदव्यपदेशात् । तथाऽपि नाक्षरस्याक्षरात्परतः परत्वं, विरोधादिति शङ्कोदयादक्षरभेदोक्तिं विना चित्प्रकृतितो भेदव्यपदेशो न सिद्ध्यतीति चतुर्मुखरुद्रमात्रनिषेधे भाष्ये हेतूकृतः । यद्यपि चात्र सौत्र

प्रकाशः

इति विशेषणान्न प्रकृतिः" इति भाष्यमाक्षिप्य समाधत्ते— **यद्यपीति** । प्रकृतिपदस्य टीकायां जडपरत्वेन वर्णनस्यापि तात्पर्यमुक्तं भवति । सूत्रखण्डव्याख्यानपरं—

तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ।

इति भेदव्यपदेशान्न विरिञ्चः । "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इति भेदव्यपदेशादीशपदप्राप्तोऽपि न रुद्रः" इति भाष्यमाक्षिप्य समाधत्ते—**यद्यपि चेति** । भेदव्यपदेशकवाक्यमाह— **अक्षरादिति** । ननु विशेषणभेदव्यपदेशाभ्यां यदि जडप्रकृतिब्रह्मरुद्राणां निरासस्तर्हि "नेतरे" इति बहुवचनान्तनिर्देशः स्यादित्याशङ्क्य समाधानमाह—**यद्यपि चेति** ।

चन्द्रिका

इतरशब्दो जडप्रकृतिचतुर्मुखरुद्रपरः, तथाऽपि चतुर्मुखरुद्रयोश्चेतनत्वेनैकीकृतत्वात् द्विवचनं युक्तम् । "अक्षरत्रयमीरितम्" इति भाष्योक्तस्मृत्या चाक्षरव्यक्तीनां भेदव्यपदेशात्,

पाण्डवस्यार्जुनस्येव कार्तवीर्यार्जुनादिव ।
ब्रह्माक्षरस्य परता स्यादब्रह्माक्षराद्ध्रुवम् ॥

तदुक्तं न्यायविवरणे — "अक्षरात्परतः परस्याप्यक्षरान्तरत्ववचनात्" इति ।

प्रकाशः

एवं पृथिव्यादिदृष्टान्तोक्त्यादीनि पूर्वपक्षोपोद्बलकानि सिद्धान्तबाधकानि निरस्येदानीं, यत् "अक्षरात्परतः" इति निकृष्टत्वेन श्रुतस्वरूपं बाधकान्तरं, तदपि नेत्याह—**अक्षरेति** । एतेन "भेदव्यपदेश" इति सूत्रखण्डस्य अक्षरव्यक्तीनां

अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ॥
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ॥

इति स्मृत्या भेदव्यपदेशादित्यप्यर्थ उक्तो भवति । पञ्चम्यन्तस्य श्लोकेनान्वयः । उभयोरर्जुनशब्दवाच्यत्वेऽपि परापरभाव इवेहापि स इत्यर्थः । ननूक्तमत्र प्रकृतहानाप्रकृतस्वीकारौ स्यातामिति, तत्र "परविद्याविषयत्वबलेन प्रकृतपरित्यागाप्रकृतग्रहणयोरुपपत्तेः"

चन्द्रिका

प्रकृताप्रकृतत्यागस्वीकारौ बाधके सति ।
दोषाय नैवैतस्यैव रेवतिष्विति वाक्यवत् ॥

यथा एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्यत्र यजे: प्रकृतवाचिन्येतच्छब्दे सत्यपि

प्रकाशः

इति न्यायविवरणटीकोक्तमाह - **प्रकृतेति** । दृष्टान्तभागविवरणपूर्वं श्लोकं व्याचष्टे—**यथेति** । द्वितीयस्य द्वितीये पादे "समेषु कर्म युक्तं स्यात्" इति द्वादशेऽधिकरणे "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इत्यग्निष्टुत्संज्ञकं यागं विधाय पुनःश्रुतं "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति वाक्यमुदाहृत्य किं पूर्वस्मिन् यागे पशुफलाय रेवत्याधारं वारवन्तीयं गुणो विधीयते अथ कर्मान्तरमिति विशये, विशिष्टयागान्तरविधौ गौरवात्, प्रकृतहानादिदोषात्, एतच्छब्दाच्च पूर्वत्रैव फलाय गुणविधिः । न च यागस्य वारवन्तीयाख्यसामाश्रयत्वायोगः, अङ्गावतारन्यायेन यागाङ्गस्तोत्रद्वारा तदुपपत्तेः । न चाग्निष्टोमस्य स्तोत्रान्वयः फलान्वयश्च विधेय इति वाक्यभेदः, क्रत्वर्थवारवन्तीयस्याप्यग्निष्टोमस्तोत्रान्वयसिद्धेः तस्याविधेयत्वादिति प्राप्ते, आश्रयाश्रयिभावस्य क्रियाकारकरूपत्वात् यागस्य साम्नश्च क्रियाकारकभावायोगेनाश्रयाश्रयिभावानुपपत्तेः अङ्गावतारन्यायस्याङ्गिङ्गिभाववि-

चन्द्रिका

प्रकृताग्निष्टुदाख्ययागत्यागः अप्रकृतयागान्तरस्वीकारश्च दोषाय नैव भवत·, प्रकृतपरत्वे वाक्यभेदात् , तथा "अक्षरात्परतः" इत्यस्य प्रकृतादृश्यत्वादिगुणकाक्षरपरतायाः बाधितत्वात्त्यागः, अप्रकृतप्रकृत्य.ख्याक्षरस्वीकारश्च । अत्र सूत्रक्रमस्तत्तद्विषयवाक्यक्रमादिति ।।

प्रकाशः

षयत्वात् , क्रत्वर्थत्वेन * वारवन्तीयस्याप्यग्निष्टोमसम्बन्धदर्शनेन प्रकृते तदसिद्धेः, शब्दगम्येऽर्थे सामान्यतो दृष्टस्यानवतारात् , * एतच्छब्दस्य च प्रस्तूयमानपरत्वात् विशिष्टं कर्मान्तरमिति सिद्धान्तितम् । अत्र यथा वाक्यभेदबलेन एतच्छब्दश्रवणेऽपि प्रकृतत्यागाप्रकृतस्वीकारौ न दोषाय, तथाऽत्रापीत्यर्थः । **अत्रेति** । आद्यसूत्रे यत्तदद्रेश्यं" इत्युपक्रमगतं वाक्यं विषयः । तत्र "अदृश्यत्वादिगुणकः" इति पुलिङ्गनिर्देशस्तु "अक्षरात्परतः परः" इति पुलिङ्गपरशब्दार्थापेक्षया । अत एव भाष्ये "परतः परः प्रतीयते" इत्युक्तम् । एवं निर्देशोऽपि अक्षरात्परतः परस्य "अक्षरात्संभवति" इति अदृश्यत्वादिगुणकाक्षरस्य च एकत्वस्फोरणाय,' 'अदृश्यत्वादिगुणकं' इत्युक्तौ "अक्षरात्संभवति" इत्युक्तं अक्षरं विष्णुः परतः परस्त्वन्य इति शङ्का स्यात् , सा मा भूदित्येतदर्थम् । "विशेषण" इति द्वितीये सूत्रे तु "तपसा चीयते ब्रह्म" इति तदुत्तरवाक्यं विषयः । "रूपोपन्यासाच्च" इत्यत्र तु तदुत्तरं "यदा पश्यः पश्यते रुक्मवर्णं' इति वाक्यं विषय इति तत्क्रमात्क्रम इत्यर्थः ।

---

* 'वारवन्तीयस्याचोदितत्वेनान्यतोऽप्राप्तस्तोत्रसंबन्धस्य फलसंबन्धस्य च विधौ वाक्यभेदप्रसङ्गात्' * इति पुस्तकान्तरपाठः ;

चन्द्रिका

अन्ये तु अचेतनं विश्वमचेतनस्य प्रधानस्यैव विकारः न तु चेतनस्य ब्रह्मणः, वैरूप्यात् । तस्मात् "तथाऽक्षरात्सम्भवतीह विश्वम्" इत्यत्र प्रधानमेव हेतुतयोच्यत इति प्राप्ते, विश्वं न ब्रह्मविकारः, किन्तु तद्विवर्तः सर्प इव रज्ज्वाः, अधिष्ठाना-

प्रकाशः

अन्ये त्विति । अदृश्यत्वादिगुणको भूतयोनिः किं प्रधानमुत जीवोऽथ परमात्मेति सन्देहे, नूपुरादेर्हेमपरिणामस्य हेमसरूपत्वस्य दर्शनात्, रज्जुविवर्तस्य भुजङ्गादेरज्जुसारूप्यदर्शनात्, जगतो जडस्य चेतनब्रह्मसारूप्यायोगेन ब्रह्मपरिणामविवर्तत्वायोगात् "अक्षरात्सम्भवतीह विश्वम्" इत्यत्रेतनं प्रधानमेव जगदुपादानतयोच्यते । 'भूतयोनिः' इति योनिशब्दो यदि निमित्तमात्रवाची, तदा जीव एवादृष्टद्वारा विश्वहेतुतयोच्यते । उक्तं च—

> परिणामो विवर्तो वा सरूपस्योपलक्ष्यते ।
> चिदात्मना तु सारूप्यं जडानां नोपपद्यते ॥
> जडं प्रधानमेवातो जगद्योनिः प्रतीयताम् ।
> योनिशब्दो निमित्तं चेत्कुतो जीवनिराक्रिया ॥

इति । एवं प्राप्ते, अक्षरं भूतयोनिं प्रक्रम्य वाक्यशेषे "यः सर्वज्ञस्सर्ववित्" इत्यादिना सर्वज्ञस्य विश्वहेतुत्वावगमात् न जडं प्रधानमदृश्यत्वादिगुणकमक्षरम् । न च "अक्षरात्परतः परः" इत्ययुक्तं, तत्राक्षरशब्देन मायाशक्त्यपरपर्यायस्याव्याकृतस्य अश्नुते

चन्द्रिका

श्यस्यमानयोश्च न सारूप्यनियमः । तदुक्तं भामत्याम्—

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।

अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥

इति । तस्माददृश्यत्वादिगुणकं शुद्धं ज्ञेयं ब्रह्मैवेति सिद्धान्त इत्याहुः । तन्न, निर्विशेषपरत्वेऽस्य पादासङ्गतेः । त्वन्मते ब्रह्मविवर्ततायाः आरम्भणाधिकरणादिषु सिद्धत्वेन विकाराश्रयणे-

प्रकाशः

स्वकार्यमिति व्युत्पत्त्या अक्षरपदेनाभिधानात्, ब्रह्मैव "अक्षरात्सम्भवतीह विश्वम्" इत्यत्रोच्यते । तदुक्तं भामत्याम्—

अक्षरं सर्वविद्विश्वयोनिर्नाचेतनं भवेत्

अक्षरात्परत इति श्रुतिस्त्वव्याकृते मता ।

अश्नुते यत्स्वकार्याणि ततोऽव्याकृतमक्षरम् ॥

इति । यत्तु सारूप्याभावान्न चिदात्मनः परिणामः प्रपञ्च इति, सत्यं, विश्वं न ब्रह्मविकारः, येन सारूप्यापेक्षा, विवर्तस्तु स्यात्, विसदृशेऽपि शङ्खे पीतिमारोपदर्शनात् सारूप्यनियमाभावादिति सिद्धान्त इत्याहुरित्यर्थः । **अनादिवासनेति** । हेतुमति विभ्रमे सादृश्याभावादनुयोगो युज्यते, अनाद्यविद्यातद्वासनाप्रवाहपतितस्तु नानुयोगमर्हतीत्यर्थः । ज्ञेयं ब्रह्मैव, न तु प्रधानं जीवात्मा वा, उपास्यत्वेनेत्यर्थः । **पादेति** । तृतीये पाद एव निवेशापत्ते-रिति भावः । **आरम्भणेति** । "तदनन्यत्वमारम्भणशब्दादिभ्यः"

चन्द्रिका

नेह पूर्वपक्षानुदयाच्च । विवर्तपरत्वे श्रुतौ रज्जुसर्पादिदृष्टान्तस्यैव वक्तव्यतयोर्णनाभ्यादिदृष्टान्तोक्त्ययोगाच्च । श्रुतेर्विवर्तपरत्वे अप्रामाण्यापातस्यान्यत्रोक्तत्वाच्च । "यद्भूतयोनिं" इति योनिपदाद्ययोगाच्च । न हि रज्जुस्सर्पस्य योनिरुच्यते, न वा सर्पः ततस्सम्भवतीति । किञ्च त्वद्रीत्या "धर्मोक्तेः" इति सौत्रपदोपात्तैः यस्सर्वज्ञ." इत्यादिवाक्यशेषोक्तैः सार्वज्ञादिकैः, तथा "सूर्यद्वारेण

प्रकाशः

इत्यत्र "कारणाद्ब्रह्मण. परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते" इत्यादिना त्वद्भाष्यादौ विवर्तत्वस्य वर्णितत्वादिति भावः । आदिपदेन प्रकृत्यधिकरणादि ग्राह्यम् । उपलक्षणमेतत्, "न विलक्षणत्वात्" इत्यधिकरणे जगतोऽचेतनत्वादिना ब्रह्मविलक्षणत्वेन न ब्रह्मोपादानकत्वमिति प्राप्ते, वैलक्षण्येऽपि गोमयवृश्चिकादेः कार्यकारणभावोपलम्भात् तदुपादानकत्वं युक्तमिति सिद्धान्तितत्वेन परिणामत्यागेन विवर्तत्वाङ्गीकारायोगात्, एतच्छङ्कायाः तत्र सूत्र एव त्वन्मते निरासेनेहापि तथा पूर्वपक्षकरणायोगाच्चेत्यपि ध्येयम् । श्रुत्यनानुगुण्यं चाह—**विवर्तेति** । 'अन्यत्र' न्यायामृतादौ । **योनिपदादीति** । "संभवतीह विश्वम्" इति सम्भवशब्दः, "अन्नं च जायते" इत्यादिशब्द आदिपदार्थः । तेषां कारणत्वप्रत्यायकत्वादिति भावः । आदिसूत्रार्थं सिद्धान्ताननुगुणतया दूषयति—**किंचेति** । एवं हि सूत्रार्थः—अदृश्यत्वादिगुणको भूतयोनिः

चन्द्रिका

ते विरजाः प्रयान्ति" इति सूर्यद्वारेण गम्यत्वादिकैश्च धर्मैः विशिष्टं कथं विश्वविवर्ताधिष्ठानं मुमुक्षुज्ञेयं शुद्धं ब्रह्म स्यात् । यच्चोक्तं द्वितीयसूत्रे "दिव्यो ह्यमूर्तः" इति दिव्यत्वादिविशेषणं जीवाद्भेदकमिति, तन्न, वस्तुतो निर्विशेषे अदृश्ये आरोपितविशेषणस्य तत्साध्यभेदस्य चाविरोधेऽपि मुमुक्षोर्भेदभ्रमनिरासायाभेदस्यैव वक्तव्यत्वेन भेदभेदकयोरुक्त्ययोगात् । विशिष्टरूपजीवाभेदभ्रमनिरासाय तदुक्तिरिति चेन्न,

प्रकाशः

परमात्मैव, "यस्सर्वज्ञः सर्ववित्" इत्यादिना सार्वज्ञ्यादिधर्मोक्तेरिति । तथा चैवंविधं ब्रह्म कथमधिष्ठानमित्यर्थः । ननु एते धर्मा अतात्विकाः, अतो न दोष इति चेत्, तर्हि तैः प्रधानादिनिरासायोगात् सिद्धान्तानुत्थितिरिति भावः । **यच्चोक्तमिति** ।

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।

अप्राणो ह्यमनाश्शुभ्रः ............................॥

इत्यदृश्यत्वादिगुणकभूतयोनेः शारीराद्विलक्षणत्वेन दिव्यत्वामूर्तत्वादिना विशेषणान्न जीवः । तथा प्रकृतस्य भूतयोने "अक्षरात्परतःपर." इत्यक्षरात्परतः प्रधानात्पञ्चमीनिर्दिष्टात्पर इति प्रथमान्तत्वेन भेदव्यपदेशान्न प्रधानं भूतयोनिरित्यर्थ इत्युक्तमित्यर्थः । तत्र एतदधिकरणबोध्ये निर्विशेषे भूतयोनिशब्दार्थे ब्रह्मणि तत्त्वतो दिव्यत्वादिविशेषणस्य भेदस्य च अभावेन ताभ्यां जीवप्रधानव्यावृत्त्ययोगात् । अरोपितयोस्तयोस्तत्र सम्भवोऽस्तीति चेत्तत्राह --**वस्तुत इति** ।

## चन्द्रिका

एकभ्रमनिरासाय भेदभेदकविषयभ्रमद्वयोत्पादनायोगात् । शुद्ध-बोधनेन भ्रमद्वयनिरासे च विशिष्टाभेदभ्रमस्यापि "अदृश्यत्वादि-गुणकः" इति प्रतिज्ञयैव लक्षणया शुद्धबोधिन्या निरासेन द्वितीयादिसूत्रवैयर्थ्यम् । यच्चोक्तं – तृतीयसूत्रे "पुरुष एवेदं विश्वं" इति सार्वात्म्यं रूपशब्दार्थ इति, तन्न, अस्मदुक्तरुक्मवर्णे इव सार्वात्म्ये रूपशब्दाप्रयोगात् ।

## प्रकाशः

"विशेषण" इत्यादिकं लक्षणया शुद्धं बोधयतीति भेदभेदकोभय-भ्रमोऽपि निवर्तयिष्यत इत्यत आह - **शुद्धबोधनेनेति** । उपलक्षण-मेतत्, त्वन्मते मन्मत इव विशेषहेतोरनुपन्यासेन दिव्यपुरुष-त्वादिविशेषणेन प्रधानेऽप्ययुक्तेन द्वयोरपि निरासस्म्भवात् "स कारणं कारणाधिपाधिपः" इतिवदक्षरात्परतो जीवादित्यपि वक्तुं शक्यत्वेन भेदव्यपदेशेनापि द्वयोर्निरासस्म्भवेन प्रत्येकमेकैकनिरासा-योगात् । विशेषणभेदाभ्यां क्रमेण जीवप्रधाननिरासे सूत्रे 'नेतरे' इत्येव स्त्रीलिङ्गेन नपुंसकलिङ्गेन वा निर्देष्टव्यत्वेन 'नेतरौ' इत्यस्य अस्वारस्यं च । मन्मते तु द्वाभ्यां हेतुभ्यां क्रमेण प्रधानचेतन-योर्निरास इति 'नेतरौ' इति पुल्लिङ्गस्य स्वारस्यमित्यपि ध्येयम् । 'रूपशब्दाप्रयोगात्' इत्युपलक्षणं, त्वन्मते पूर्वसूत्रयोरन्यतरविवक्षितै-कविज्ञाननिबन्धनसर्वविज्ञानानन्तर्गतत्वात्सर्वात्मभावस्येत्यपि ध्येयम् ।

चन्द्रिका

अत्रापि परपक्षे "अदृश्यत्वादिगुणकः" इति गुणोक्तेः, "विशेषणभेदव्यपदेशाभ्यां" इति जीवादिभ्यो भेदोक्तेश्च निर्गुणत्वाद्वैतप्रतिकूलता स्फुटैव ।

केचित्तु—अदृश्यत्वादिगुणकत्वं प्रधानस्य अक्षरात्परतः परत्वं तु जीवस्येति प्राप्ते, द्वयमपि परमात्मन इति सिद्धान्त इत्याहुः । तन्न,

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाश्शुभ्रो अक्षरात्परतः परः ।।

इति अमूर्तत्वव्याप्तत्वाप्राणत्वादिविशिष्टत्वेन श्रुतेऽक्षरात्परतः परे

प्रकाशः

इदमधिकरणं परैरारभ्यमेवेत्याह— अत्रापीति ।

केचित्त्विति । अत्र "अथ परा" इत्यादिवाक्ये प्रधानपुरुषौ प्रतिपाद्येते उत परमात्मेति संशये, "यत्तदद्रेश्यं" इत्यादिना पृथिव्याद्यचेतनगतदृश्यत्वादीनां निषेधात्, तज्जातीयमचेतनं प्रधानमेवादृश्यत्वादिगुणकं भूतयोन्यक्षरं, "अक्षरात्परतः परः" इति तु तस्याधिष्ठाता पुरुष एवेति तावेवात्र प्रतिपाद्याविति प्राप्ते, प्रधानपुरुषयोरसम्भावितस्य सार्वज्ञ्यादिधर्मस्योक्तेः फलाभिसन्धिरहितकर्माराध्यत्वपरापरविद्याविषयत्वादिना विशेष्यमाणत्वात्, अक्षरात् अव्याकृतात् भूतसूक्ष्मात्परतः समष्टिपुरुषात् पर इति भेद व्यपदेशात्, "अग्निर्मूर्धा" इत्यादिना जगद्रूपोपन्यासाच्च न प्रधानजीवावत्रोच्येते, किन्तु परमात्मैवेत्याहुरित्यर्थः । तदुक्तं—

चन्द्रिका

जीवत्वशङ्कानुदयादिति ॥

प्रकाशः

दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षा-
त्पञ्चम्युक्ताक्षरं यत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।
सर्वज्ञत्वादिदृष्टे प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं
पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥

इति । **जीवत्वशङ्केति** । उपलक्षणमेतत्, मन्मतरीत्या निरवकाशोपादानत्वादिना पूर्वपक्षसंभवे सावकाशदृश्यत्वादिनिषेधेनेह नियमेन अचेतनोपस्थित्ययोगात्, "अवर्णमचक्षुःश्रोत्र" इत्यादिना चेतनधर्मब्राह्मणत्वादिवर्णचक्षुरादिकरणनिषेधेनेह भूतयोनिश्चेतन इत्यपि वक्तुं शक्यत्वेन तेन प्रधानमात्रपूर्वपक्षायोगात् । द्वितीयसूत्रे अक्षरव्यक्तीनां भेदव्यपदेशासिद्धेः तेन प्रकृतिनिरासस्य क्लिष्टत्वादित्यपि ज्ञेयम् ॥

यत्तु कश्चिदाह—अदृश्यत्वादिगुणकं प्रधानं जीवो वा शिवो वेति विशये, महदादिपरिणामिनो भूतयोनित्वसम्भवात् प्रधानमक्षरं, "प्रधानममृताक्षरं" इति श्वेताश्वतरश्रुतौ अमृतशब्दे जीवेऽक्षरपदप्रयोगात् जीवो वेति प्राप्ते, सार्वज्ञ्यादितद्धर्मोक्तेः शिव एवेति, तन्न, "नारायणाद्ब्रह्मा जायते" "नारायणाद्रुद्रो जायते" "रुद्रस्य शिर उत्पिपेष"

न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।

चन्द्रिका

टीकाक्षरार्थस्तु—**पृथिव्यादिदृष्टान्तेनेति** । श्रुतौ ऊर्णनाभिदृष्टान्तस्य प्राथम्येऽपि तत्र 'सृजते' इत्यनेन कर्तृत्वप्रतीतेः 'पृथिव्यादि'

प्रकाशः

इत्यादिना जननमरणाज्ञानादिमति रुद्रे मुख्यसार्वज्ञ्यायोगात् ।

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।

"अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा" "ऋगाद्या अपराः विद्याः" इत्यादिवचनसिद्धपरविद्याविषयत्वरूपविष्णुलिङ्गविरोधेन, शिव इति सिद्धान्तस्यानुदयात् । "अन्यं" इति प्रसिद्धेशशब्दिताद्रुद्रादस्य भूतयोन्यक्षरस्य भेदोक्तेश्च ।

तामक्षरं परं प्राहुः परतः परमक्षरम् ।

हरिमेव... ... ... ... ... ... ... ... ... ... ...॥

इत्यादिस्मृतिविरोधाच्च । आथर्वणभाष्योदाहृतानेकवचनजातविरोधाच्चेत्यादि ध्येयम् ।

"यथोर्णनाभिस्सृजते गृह्णते च" इति श्रवणात् 'ऊर्णनाभ्यादिदृष्टान्तेन' इति वाच्ये पृथिवी" इत्याद्युक्तिः टीकायां न युक्तेत्याशङ्क्याह – **श्रुताविति** । "ऊर्णनाभिपृथिव्यादिदृष्टान्तेन अक्षरस्य जगदुपादानत्वमुक्त्वा" इति तत्त्वप्रदीपवाक्यं तु अतद्गुणसंविज्ञानाश्रयेण वा, ऊर्णनाभिदेहस्योपादानत्वाभिप्रायेण वा कथञ्चिन्नेयमिति भावः । "तच्च तस्यां अक्षरात्परत इति सामानाधिकरण्येनोपपन्नम्" इति वाक्यं सामानाधिकरण्ये हेतूक्त्या व्यनक्ति—

चन्द्रिका

इत्युक्तम् । **सामानाधिकरण्येनेति** । चित्प्रकृतेरुत्तमादुत्तमस्याभावेन 'अक्षरात्परतः' इति पञ्चम्योर्वैयधिकरण्यायोगादिति भावः । **उक्तार्थे हेतुतयेति** । "तपसा चीयते" इत्यत्रालोचनार्थेन तपश्शब्देनाज्ञानप्रतीतौ तन्निरासाय "यस्य ज्ञानमयं तपः" इत्यनेनोक्ति पूर्णज्ञानत्वे हेतुतया सार्वज्ञ्योक्तिरित्यर्थः । **सूत्रखण्डस्यार्थान्तरमाहेति** । सूत्रे विशेषणशब्दस्य न केवलं सर्वज्ञत्वविशेषणादित्येवार्थः, किन्तु अक्षरात्परतः परत्वविशेषणादित्यप्यर्थः । एवं भेदशब्दस्य हिरण्यगर्भाद्रुद्राद्वा भेदमात्रं नार्थः, किन्त्वक्षरब्दक्तीनां भेदोऽपि । तथा चाक्षराणां भेदव्यपदेशादक्षरात्परतः परत्वमक्षरस्यैव विशेषणमित्यपि सूत्रयोजनेति भाष्यार्थ इत्यर्थः । 'इत्युक्त्वा प्रतीयते' इति भाष्ये क्रिययोस्समानकर्तृकत्वाभावेऽपि क्त्वाप्रत्ययः

यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।

इतिवद्द्रष्टव्यः ॥

प्रकाशः

**चित्प्रकृतेरिति** । द्वितीयसूत्रे— 'तपसा चीयते ब्रह्म" इत्यत्र अज्ञानप्रतीतौ तन्निरासाय "यस्य ज्ञानमयं तपः" इत्युक्तार्थे हेतुतया अदृश्यत्वादिगुणकस्य सार्वज्ञ्यविशेषणोक्तिः" इति वाक्यं व्यनक्ति— **तपसेति** । तपसा सम्बध्यते, ब्रह्म कर्तृ, अतपदिति फलितोऽर्थः । अर्थान्तरं विशदयति – **सूत्रेति** । पूर्वपक्षभाष्ये अनुपपत्तिं समाधत्ते— **इत्युक्त्वेति** । तत्र यथा 'वर्तमानः' इत्यध्याहारस्तथाऽत्रापि, 'इत्युक्त्वा' 'श्रुते वाक्ये' इति वा "इत्यभिधानात् परतः परः प्रतीयते" इति वा अध्याहारेण योज्यमिति भावः ॥

॥ इति अदृश्यत्वाधिकरणम् ॥

# — अथ वैश्वानराधिकरणम् —

अदृश्यत्वादिगुणेषु सर्वगतत्वं "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति वैश्वानरस्योक्तमिति,

---

तत्त्वप्रकाशिका

अत्र लोकतोऽन्यत्रप्रसिद्धवैश्वानरनाम्नः पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्धये ब्रह्मणि समन्वयप्रतिपादनादस्ति शास्त्रादिसङ्गतिः। श्रुत्यादिसङ्गतिं विषयवाक्योदाहरणपूर्वकं विषयादिकं च सूचयति— **अदृश्यत्वादीति।** गताधिकरणेऽदृश्यत्वादिगुणा विष्णोरुक्ताः। तेषु सर्वगतत्वं चोक्तं "नित्यं विभुं सर्वगतम्" इति। तददृश्यत्वादिगुणेषूक्तं सर्वगतत्वं च च्छन्दोगश्रुतावभिविमानपदेन वैश्वानरस्योक्तम्, अभितो विगतं मानं मर्यादा यस्येति,

मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते।

इत्यभिधानात्। तस्य च वैश्वानरस्य विष्णोरितरत्वे सर्वगतत्वमप्यन्यस्य प्रसज्येतेत्यवश्यनिर्णेयत्वम्। स वैश्वानरो विषयः। किं विष्णुरन्यो वेति संशयः सर्वगतत्वमन्यत्र प्रसिद्धिश्च सन्देहबीजम्। नायं वैश्वानरो विष्णुः, किंत्वग्निदेवता तेजोभूतं वा स्यादिति पूर्वः पक्षः, वैश्वानरश्रुतेः। न च वाच्यम् सर्वगतत्वलिङ्गाद्वैश्वानरो विष्णुरिति लिङ्गस्य श्रुतितो दुर्बलत्वात्। न च लिङ्गस्य निरवकाशत्वेन प्राबल्याच्छ्रुतिबाधकत्वमिति मन्तव्यम्, श्रुतेरपि प्रसिद्धितो निरवकाशत्वात् श्रुतेर्विष्णुविषयत्वेऽग्न्यादिविषयतया लोकप्रसिद्धिबाधात्।

अत आह—

**ओम् वैश्वानरः साधारणशब्दविशेषात् ओम् ॥ २४ ॥**

अग्न्याविष्ण्वोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ॥ २४ ॥

**ओम् स्मर्यमाणमनुमानं स्यादिति ओम् ॥ २५ ॥**

तत्त्वप्रकाशिका

वैदिकविद्याभेदव्यहारविरोधाच्च । न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ति । अतः प्रसिद्धिलिङ्गयोरुभयोरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्नाविष्ण्वोस्साधारण्यमेव स्यान्न तु लिङ्गेन विष्णुपरतानिश्चयः । अतो न वैश्वानरो विष्णुरिति न सर्वगत्वं तस्येति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे- **अत इति** । अथ वैश्वानरो विष्णुरेव, "आत्मानं वैश्वानरं" इत्यात्मशब्दात । न चोक्तरीत्या साधारणवैश्वानरश्रुतिसद्भावादनिर्णय इति वाच्यम् , साधारणस्यापि वैश्वानरशब्दस्य

आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।

इत्यादौ विरणादेव प्रसिद्धत्वेनान्यत्रानवकाशात्मशब्दसामानाधिकरण्येन विष्णुपरत्वस्य सम्भवात् , प्रसिद्ध्यादेरन्यथाऽपि सिद्ध्या सावकाशत्वस्य वक्ष्यमाणत्वादिति भावः । २४ ॥

नन्वात्मशब्दस्यामुख्यवृत्तिमभ्युपेत्य अग्न्यादीनामेव वैश्वानरत्वं किं न स्यादित्याशङ्कां परिहर्तुं हेत्वन्तरेण वैश्वानरस्य विष्णुत्वं निश्चाययत्सूत्रमुपन्यस्य व्याचष्टे **स्मर्यमाणमिति** । "अह

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

इति स्मर्यमाणमत्रापि स एवोच्यते इत्यस्यानुमापकम्, समाख्यानात् । इतिशब्दः समाख्याप्रदर्शकः ॥ २५ ॥

## ओम् शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपेदशादसम्भवात्पुरुषविधमपि चैनमधीयते ओम् ॥ २६ ॥

---

तत्त्वप्रकाशिका

वैश्वानरो भूत्वा" इति स्मृत्युक्तं विष्णोर्वैश्वानरत्वमत्र वैश्वानरविद्यायामपि । स गीतोक्तो भगवानेव वैश्वानरपदेनोच्यत इत्यस्यार्थस्यानुमापकं भवति । स्मृतौ विष्णोर्वैश्वानरत्वोक्तेर्वैश्वानरविद्यायामप्यसावुच्यत इति भावः । स्मृत्युक्तवैश्वानरस्य विष्णुत्वेऽप्यत्रोक्तस्य कुतो विष्णुत्वमित्यत आह—**समाख्यानादिति** समाख्यानयुक्तिर्न सूत्रितेत्यत आह—**इतीति** । अनेन 'इति स्मर्यमाणं' इत्यन्वयः सूचितो भवति ॥ २५ ॥

वैश्वानरस्य विष्णुत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे—**शब्दादिभ्य** इति । यदुक्तम्, आत्मशब्दविशेषणात्सत्समाख्यानाच्च वैश्वानरस्य विष्णुत्वनिश्चय इति, तदयुक्तम्, यथा खलु वैश्वानरस्य विष्णुत्वनिश्चायकात्मशब्दादि विद्यते, तथाऽग्नित्वनिश्चायकस्यापि विद्यमानत्वात् । तथा हि—वैश्वानरशब्दस्यात्मशब्दसमा-

"अयमग्निर्वैश्वानरः" "वैश्वानरमृत आजातमग्निं" इत्यादिशब्दः "वैश्वानरे तद्धुतं भवति हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इत्याद्यग्निलिङ्गमादिशब्दोक्तम् "येनेदमन्नं पच्यते तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं" इत्यादिना पाचक-

तत्त्वप्रकाशिका

नाधिकृतत्ववदग्निशब्दसमानाधिकृतत्वं च श्रूयते "अयमग्निः" इति बृहदारण्यके, "वैश्वानरं" इत्यस्यामृचि च। तथाऽग्निलिङ्गं च वैश्वानरे होमाधिकरणत्वं गार्हत्याद्यङ्गत्वं च श्रूयते "वैश्वानरे तद्धुतं" इत्यादौ। तथा वैश्वानरे पाचकत्वाख्यमग्निकर्म च श्रूयते "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इति बृहदारण्यके, "तद्यद्भक्तं" इति च्छान्दोग्ये च। तस्माद्वैश्वानरस्य विष्णुत्वज्ञापकवत् अग्नित्वज्ञापकस्यापि सत्त्वान्न विष्णुरेवायमिति निश्चयो युज्यत इत्यर्थः। अत्र सर्ववैश्वानरविद्यानां विचार्यत्वात्तत्तद्वाक्योद्धारो युक्त एव, समाख्यारूपेण वा। "मूर्धानं दिवः" इति मन्त्रार्थः—दिवः कारणभूतमूर्धानं पृथिव्याः कारणभूतपादं जनानां सम्यग्ज्ञानायाभिव्यक्तम् सर्वज्ञमखण्डेशमत्यन्तं जनानां पातारं वैश्वानरमग्निं देवाः स्वास्यतयाऽकुर्वन्निति। गतिसाधनत्वादरतिः पादः। "ऋताय जातं" इति समाख्यानात्सप्तमी तादर्थ्ये। "अन्नं थं" इति हि श्रुतिः। "अग्निर्देवानां मुखं" इति च। "वैश्वानरे तद्धुतं भवति" इति वाक्यार्थः "एवं विद-

त्वेनान्तः प्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेत्, न, "अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीत" इति "सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूप इति स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु

---

तत्त्वप्रकाशिका

यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यात्" इति वाक्यादवगन्तव्यः । भक्तमन्नम् । परिहारसूत्रांशं व्याचष्टे— नेति । उभयत्र श्रुत्यादिसाम्याद्वैश्वानरस्य विष्णुत्वनिश्चयायोग इति न युक्तम्, उभयत्र श्रुत्यादिसाम्येऽपि सावकाशत्वनिरवकाशत्वबलान्निश्चयोपपत्तेः । तत्र यदग्निनाम लिङ्गं कर्म च वैश्वानरे श्रूयते, तद्विष्णौ सावकाशं, "अथ हेममात्मानं" इत्यग्न्यादिनामलिङ्गकर्मवत्त्वेन विष्णोरुपासनोपदेशात् । न चात्मशब्दादेरन्यत्रास्त्यवकाशः । अतो निरवकाशेन सावकाशबाधोपपत्तेर्युज्यते वैश्वानरस्य विष्णुत्वनिश्चय इति भावः । न च वाच्यम्, उपासनार्थमुक्तत्वादेव "योषितमग्निं ध्यायीत" इत्यादाविवासत्त्वम्,

नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।

इत्यादिवचनात् । वाक्यान्तरस्याविरोधेन योऽर्थस्स्थाप्यते, तदर्थत्वाच्च । 'विश्वं' पूर्णम् । 'आरात्' समीपे स्वहृदये । प्रथमेतिशब्दो विधिसमाप्तौ । द्वितीयस्य 'इत्युपासीत' इत्यन्वयः ।

सर्वेषु वेदेषु कामचारो भवति" इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ।

अनात्तत्वादनात्मान ऊनत्वाद्गुणराशितः ।
अब्रह्माणः परे सर्वे ब्रह्माऽऽत्मा विष्णुरेव हि ॥

इत्यादिना "को न आत्मा किं ब्रह्म" इत्यारम्भाच्च अन्येषामसम्भवात् विष्णुरेव वैश्वानरः । "चन्द्रमा मनसो जातः, चक्षोस्सूर्यो अजायत" इत्यादिना यः पुरुषाख्यो विष्णुरभिहितः, तद्विधमेवात्र "मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा"

---

**तत्त्वप्रकाशिका**

प्रकरणबलाच्च वैश्वानरस्य विष्णुत्वनिश्चयो भवतीत्याह--**अनात्तत्वादिति** । "को न आत्मा किं ब्रह्म" इति विचारपूर्वकं वैश्वानरविद्याया आरभ्याधीतत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरेवेति निश्चयो भवति, "अनात्तत्वात्" इति वचनेन विष्णोरन्येषामात्मत्वाद्यसम्भवादित्यर्थः । श्रुतिसमाख्यया च वैश्वानरस्य विष्णुत्वमुपपादयति—**चन्द्रमा इति** । यः पुरुषाख्यो विष्णुः पुरुषसूक्ते "शीर्ष्णो द्यौस्समवर्तत । चक्षोस्सूर्यो अजायत । प्राणाद्वायुरजायत पद्भ्यां भूमिः" इत्यादिना वाक्येन द्युभ्वादिजनकशीर्षादिमानभिहितः तद्विधमेवात्र वैश्वानरं चाधीयते च्छन्दोगाः "मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा पृथिव्येव पादौ" इत्यादिना वाक्येन । अतः पुरुषसूक्तसमाख्ययाऽपि विष्णुरेव वैश्वानर इत्यर्थः । ननु

इत्यादिना एनं वैश्वानरमधीयते । च शब्देन सकलवेदतन्त्र-पुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति । तथा च ब्राह्मे—

यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।
तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम् ॥

इति । चतुर्वेदशिखायां च—

सहस्रशीर्षा पुरुषस्सहस्राक्षः सहस्रपात् ।

इति एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्त-शीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः" इति । बृहत्संहितायां च—

यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद ॥

---

तत्त्वप्रकाशिका

पुरुषसूक्तस्य विष्णुपरत्वे भवेत्तत्समाख्ययैतद्विद्याया विष्णुपरत्वं, तदेव कुत इत्यत आह—**चशब्देनेति** । विष्णुपरत्वं पुरुषसूक्तस्य प्रसिद्धमिति सूचयतीत्यर्थः । अपिपदेनैवोभयसमुच्चयसिद्धेर्नान्यत्रोपक्षीणश्चशब्दः । किं तद्वेदादीत्यतस्तदुदाहरति—**तथा चेति** । श्रुतेः प्रथमप्रतिज्ञानेऽपि तस्याः पुरुषसूक्तमुपन्यस्य विष्णुपरतया व्याख्यात्र्याः साक्षात्प्रतिज्ञातार्थाऽसाधकत्वान्न प्रथममुदाहरणम् । प्रतिज्ञात्वाविक्रय-क्रमाभिप्राया । 'परः' विलक्षणः । आदिपदेन

इत्यादि ।

यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ।।

इति नारदीयवचनान्नाभेदोक्तिविरोधः ।। २३ ।।

## ओम् अत एव न देवता भूतं च ओम् ।।२७।।

**अग्निवैश्वानरादिशब्दः तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ।। २७ ।।**

---

**तत्त्वप्रकाशिका**

सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ।

इति ब्रह्मतर्कादिग्रहणम् । ननु पुरुषसूक्ते द्युश्वादिजनकशीर्षादिमत्त्वं पुरुषस्योच्यते, वैश्वानरविद्यायां पुनर्वैश्वानरस्य तदभेदः । अतो विरुद्धार्थत्वान्नेयं समाख्येत्यत आह—**यस्मादिति** । वैश्वानराङ्गानां सूर्याद्यभेदोक्तावपि न पुरुषसूक्तवैश्वानरविद्ययोर्विरोधः, अभेदोक्तेरपि तज्जन्यजनकभावविवक्षावत्त्वादिति भावः ।। २६ ।।

ननु वैश्वानरशब्दस्य देवताभूतयोः प्रसिद्धत्वात् अत्राप्यसौ तत्परः किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे—**अत एवेति** । यद्यपि वैश्वानरशब्दोऽन्यत्रप्रसिद्धः, तथाऽपि नात्र तेनान्यदभिधीयते, आत्मशब्दादिहेतोरेव, तस्य चान्यत्र निरवकाशत्वादिति भावः । अत्राग्न्यादिग्रहणं विद्यान्तरोपलक्षणार्थम् ।। २७ ।।

नन्वग्न्यादिशब्दानामग्न्यादिवाचित्वाभावे ब्रह्मैकवाचित्वे च प्रसिद्धिविरोधः स्यात्, तस्याःकारणान्तराभावात् । अतः प्रसिद्ध्यन्यथा-

# ओम् साक्षादप्यविरोधं जैमिनिः ओम् ॥ २८ ॥

नाग्न्यादयश्शब्दा अग्न्यादिवाचकाः । तथाऽपि साक्षादेवानन्ययोगेन ब्रह्मवाचकैः शब्दैः व्यवहारार्थं अनभिज्ञानाच्च अन्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ।

व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ॥

इति स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥

---

तत्त्वप्रकाशिका

नुपपत्त्याऽन्येषां वाच्यत्वमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे— साक्षादिति । यद्यप्यग्न्यादिशब्दा नाग्न्यादिवाचकाः, किंतु ब्रह्मवाचका एव तथाऽपि न प्रसिद्धिविरोधः, अनन्ययोगेन ब्रह्मवाचकैरपि तैर्ज्ञानिनो ज्ञानादिसिद्ध्यर्थमन्यत्राग्न्यादौ व्यवहरन्ति, तदन्ये तु ज्ञानाभावादेवेत्यभ्युपगमात् । एवमभ्युपगमे च प्रसिद्धेरन्यथोपपत्तिसिद्धेर्न तद्विरोध इति जैमिनिराचार्यो वक्तीत्यर्थः । ननु जैमिन्यादिमतानां भगवन्मताविरोधित्वे जैमिन्यादिग्रहणवैयर्थ्याद्विरोधित्वे च कथं विरुद्धराद्धान्तेन परिहार इत्यत आह— व्यासेति । जैमिन्यादिमतानां न व्यासमतविरोधः । तथाऽपि तन्मतैकदेशोररीकाराभिप्रायेण जैमिन्यादिग्रहणोपपत्तिरिति भावः । 'चित्तस्थिताकाशात्' इति चित्तस्थितज्ञानाख्याकाशात् बहुवचनं वक्ष्यमाणमतविवक्षया ॥ २८ ॥

ननु लौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि वैदिकाग्न्यादि

## ओम् अभिव्यक्तेरित्याश्मरथ्यः ओम् ॥ २९ ॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

## ओम् अनुस्मृतेर्बादरिः ओम् ॥ ३० ॥

तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ॥ ३० ॥

---

### तत्त्वप्रकाशिका

सूक्तविद्यादिप्रसिद्ध्यन्यथानुपपत्त्या अग्न्यादीनां वाच्यत्वं स्यात्, तत्राज्ञानादिमूलत्वकल्पनायोगेनान्यथोपपत्त्यभावात् । नापि व्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे—**अभिव्यक्तेरिति** । न वैदिकाग्न्यादिसूक्तादिप्रसिद्ध्यन्यथानुपपत्त्याऽन्येषां सूक्तादिप्रतिपाद्यत्वं, तत्र तत्र सूक्तादौ परब्रह्मण एव प्रतिपाद्यत्वेऽग्न्यादीनामप्रतिपाद्यत्वेऽग्न्यादिसूक्तादिभिर्ब्रह्मोपास्तावग्न्यादिष्वेव स्वेच्छया ब्रह्मणोऽभिव्यक्तिनियमात्तदभिप्रायेण प्रसिद्धेरुपपत्तेरित्याश्मरथ्याचार्यो वक्तीत्यर्थः ॥ २९ ॥

प्रकारान्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं वदत्सूत्रमुपन्यस्य व्याचष्टे—**अनुस्मृतेरिति** । विष्णोरेवाग्न्यादिविद्याप्रतिपाद्यत्वेऽपि तस्य तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव प्रतिपत्तव्यत्वाभिप्रायेणाग्न्यादिसूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं वाच्यमिति बादरिराचार्यो वक्तीत्यर्थः ॥ ३० ॥

# ओम् सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ओम् ॥

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते "तं यथा यथोपासते तदेव भवति" इति दर्शयति ॥ ३१ ॥

तत्त्वप्रकाशिका

रीत्यन्तरेण सूक्तादिनियमस्यान्यथोपपत्तिं कथयत्सूत्रमुपन्यस्य व्याचष्टे—**सम्पत्तेरिति** । अग्न्यादिसूक्तादिषु परब्रह्मण एव प्रतिपाद्यत्वेऽग्न्यादिसूक्तादिभिरग्न्यादौ भगवदुपास्तावग्न्यादिप्राप्त्यभिप्रायेण सूक्तादिनियमोपपत्तेर्न तदन्यथानुपपत्त्याऽन्येषां वाच्यत्वं मन्तव्यमिति जैमिनिराचार्यो मन्यत इत्यर्थः । जैमिनिमतं किमर्थं पुनरुच्यते इति मन्दाशङ्कानिवृत्त्यर्थं लौकिकव्यवहारे साक्षाद्ब्रह्मवाचकत्वेऽपि शब्दानामविरोधं वदन् जैमिनिः सूक्तादिव्यवहारस्याग्न्यादिप्राप्त्याऽन्यथोपपत्तिं वर्णयतीत्युक्तम् । नन्वग्न्यादिषु भगवदुपास्तावग्न्यादिप्राप्तिर्भवतीत्येतत्कुत इत्यतः, सूत्रसूचितां श्रुतिमुदाहरति—**तमिति** । तदेव 'भवति' प्राप्नुवन्ति । अत्र व्यवहारस्योपचरितत्वाङ्गीकारे प्रागुक्तैवानुपपत्तिः ॥ ३१ ॥

यदुक्तमग्न्यादिसूक्तादिभिर्ब्रह्मोपासकस्याग्न्यादिप्राप्तिरिति, तच्छ्रुत्युक्तमपि न युक्तम्, "मद्भक्ता यान्ति मामपि" इत्यादेरन्योपासकस्यान्यप्राप्तेरयोगात् । "श्रुतोपनिषत्कगत्यभिधानाच्च" इत्यादौ तदन-

न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

## ओम् आमनन्ति चेनमस्मिन् ओम् ॥ ३२ ॥

'एनं' विष्णुं, 'अस्मिन्' अग्न्यादौ, आमनन्ति, "योऽग्नौ तिष्ठन् य एष एतस्मिन् अग्नौ तेजोमयोऽमृतमयः पुरुषः" इत्यादिना ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥

---

तत्त्वप्रकाशिका

भ्युपगमाच्चेति भावेनाशङ्क्य तत्परिहारतया सूत्रमवतार्य व्याचष्टे— **न हीति ।** न विष्णूपासकस्याग्न्यादिप्राप्त्युक्तिरयुक्ता, अग्न्यादिप्राप्तिपदेन तदन्तर्गतभगवत्प्राप्तेर्विवक्षितत्वात्, यतोऽग्न्यादावपि विष्णुमामनन्ति श्रुतय इति भावः । च शब्दः शङ्काव्यावर्तकः । अतोऽयं वैश्वानरो विष्णुरेवेति तस्यैव सर्वगतत्वमिति सिद्धम् ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य ब्रह्मसूत्रभाष्यस्य टीकायां तत्त्वप्रकाशिकायां जयतीर्थमुनिविरचितायां प्रथमाध्यायस्य द्वितीयः पादः

— श्रीमध्वान्तर्गतश्रीवेदव्यासार्पणमस्तु —

—o—

चन्द्रिका

# ओम् वैश्वानरः साधरणशब्दविशेषात् ओम् ॥

अत्र यद्यपि वैश्वानरनाम्नः सूत्र एवाग्नाविष्ण्वोः साधारण्यस्योक्तयोभयत्रप्रसिद्धता, तथाऽप्यन्यत्रप्रसिद्धवाचकत्वादिबहुलिङ्गसमन्वयस्याप्यत्रोक्तेर्बह्वनुग्रहस्य च न्याय्यत्वात् प्रथमातिक्रमे कारणाभावाच्च पादसङ्गतिरित्येके । इतरे तु—अन्यत्रप्रसिद्धलिङ्गांशेन द्वितीयपादसम्बन्धात्, उभयत्रप्रसिद्धनामांशेन च तृतीयपादसम्बन्धादुभयानुग्रहाय पादद्वयमध्येऽस्य निवेश इत्याहुः । तन्न, "अन्यत्र-

प्रकाशः

ओम् वैश्वानरः साधारणशब्दविशेषात् ओम् ॥ अत्र टीकायां "लोकतोऽन्यत्रप्रसिद्धवैश्वानरनाम्नः वाचकत्वाद्यनेकलिङ्गसमन्वयसिद्धये" इत्यादिना अस्य नयस्य अत्र पादे अन्तर्भाव उक्तः । स च सुधायां—"अस्याधिकरणस्य नात्रान्तर्भावः सम्भवति, नामात्मशब्दसमन्वयार्थत्वात् । नापि पूर्वत्र, लिङ्गसमन्वयस्याप्यत्र सिद्धत्वात् । न चोभयबहिर्भावः, अन्यत्रप्रसिद्धशब्दविषयत्वात् । न चावक्तव्यता, समन्वयासिद्धिप्रसङ्गात् । तत्कथमित्यतः लिङ्गाधिका" इत्यत्र अन्तर्भावः समर्थितः । यद्वा—पादद्वयार्थत्वेन एकत्र प्रवेशानुपपत्तेः पादद्वयशेषोऽयम्" इत्यादिना ग्रन्थेन विवृतः । तत्र "लोकतोऽन्यत्र प्रसिद्ध" इत्यंशस्य सूत्रविरोधाशङ्कां समाधातुमाह—**अत्र यद्यपीति** । उत्तानदृशां समाधिद्वयमनूद्य निराह—**तथापीति** । नाम्न उभयत्रप्रसिद्धत्वेऽपीत्यर्थः । **प्रथमेति** । नामांशेन तृतीये, लिङ्गांशेन

चन्द्रिका

प्रसिद्धवैश्वानरनाम्नः " इति टीकाविरोधात् । सूत्रोपात्तवैश्वानरशब्दस्यैवान्यत्रप्रसिद्धिसम्भवे उक्तकल्पनाद्वयायोगाच्च । तस्मादित्थं पादसङ्गतिः—वैश्वानरशब्दस्य श्रुत्यन्तरेऽग्नौ प्रयोगाद्वा, विषयवाक्येऽग्निशब्दसामानाधिकरण्याद्वाऽन्यत्रप्रसिद्धता नाभिप्रेता, येन " स्थूलभुग्वैश्वानरः प्रथमः पादः " इति श्रुत्यन्तरे विष्णावपि प्रयोगाद्वा, " आत्मानं वैश्वानरं " इति विषयवाक्ये " गौणश्चेन्नात्मशब्दात् " इत्यत्र विष्णवसाधारणतयोक्तात्मशब्दसामानाधिकरण्याद्वोभयत्रप्रसिद्धता स्यात् । किन्तु लोकतः । अत एव टीकायां " लोकतोऽन्यत्रप्रसिद्ध " इत्युक्तम् । सूत्रोक्तं साधारण्यं

प्रकाशः

लिङ्गपादे अन्तर्भावप्राप्तौ प्रथमस्य लिङ्गपादान्तर्भावस्य अतिक्रमे कारणाभावाच्चेत्यर्थः । 'सम्भवे' इत्युक्तसम्भवप्रकारमाह— **तस्मादिति** । 'सङ्गतिः' अन्तर्भावरूपा । यदि " आकाशोऽर्थान्तर " इत्यादाविव " वैश्वानरमृत आजातमग्निं " इत्यन्यत्र प्रयोगेण वा, सर्वगतत्वादेरादित्यादिशब्दसामानाधिकरण्येन वा, श्रुत्यन्तरसामानाधिकरण्येन वा अन्यत्रप्रसिद्धता स्यात्, तदा " स्थूलभुग्वैश्वानरः " इत्यादौ प्रयोगादितौल्यस्य विष्णावपि सत्त्वेन " श्रुत्यन्तरादिभिः तुल्या " इत्युक्तलक्षणसत्त्वेनोभयत्रप्रसिद्धता स्यात् । न चैवं, किन्तु लोकप्रयोगात् । स च विष्णौ नेति नोभयत्रप्रसिद्धतेत्यर्थः । सौत्रोक्तेष्टीकारीत्या गतिमाह— **सूत्रोक्तमिति** । " अतः प्रसिद्धिलिङ्गयोरुभ-

चन्द्रिका

तु अन्यत्र प्रसिद्धेर्विष्णुलिङ्गानां च निरवकाशत्वेन तुल्यबलतया, न तु वैश्वानरशब्दस्योभयत्र प्रसिद्धेत्यन्यत्रप्रसिद्ध्यविघातेनैव टीकायां दर्शितम् । अत्रानुव्याख्याने " श्रुतिर्लिङ्गाधिका परा " इति वैश्वानरशब्दस्य नामत्वोक्तेर्लोकेऽग्नौ रूढत्वाच्च टीकायां नामतोक्ता । " विश्वजीवान्तरत्वाद्यैर्लिङ्गैः " इति सङ्क्षेपभाष्यकारीया

प्रकाशः

योरपि निरवकाशत्वेन वैश्वानरश्रुतेरग्निविष्ण्वोस्साधारण्यमेव स्यात " इति टीकायामित्यर्थः । या तु न्यायविवरणटीकायां रूढ्याऽन्तरधिकरणन्यायेन च विष्णौ तदितरत्र श्रुतेः साधारण्योक्तिः, सा अभ्युपेत्यवादेन नेया । याऽपि तत्त्वप्रदीपे " पूर्वत्रान्यत्र प्रसिद्धिमात्रप्रतिषेधात् ज्वलनजनार्दनयोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रवृत्तिप्रदर्शनेन उभयत्र प्रसिद्धोभयविधपदकदम्बकसमन्वयाव सरसूचनमाचरति—अग्निविष्ण्वोरित्यादिना " इत्युक्तिः, साऽपि टीकानुसारात्, यद्यप्येवं साधारण्यं, तथाऽपि लोकतोऽन्त्रप्रसिद्धत्वादत्र निवेश इत्याद्यभिप्रायेण योज्येति भावः । टीकायां वैश्वानरशब्दस्य नामत्वोक्तेर्मूलं वदन् अणुभाष्यविरोधशङ्कां च निराह—अत्रेति । लोकेऽग्नौ रूढत्वाच्चेति । " बहुभी रूढनामभिः " इत्यनुभाष्योक्तेः, " श्रुतेरपि प्रसिद्धितो निरवकाशत्वात् " इति टीकोक्तेः, "श्रुतेर्देवताभूतविशेषयो रूढत्वात् " इति न्यायविवरणटीकोक्तेः, " वैश्वानरशब्दस्य अविद्वद्रूढ्या अग्निविषयस्यापि " इति सन्न्याय-

चन्द्रिका

लिङ्गत्वोक्तिस्तु सिद्धान्ते ब्रह्मणि यौगिकत्वाभिप्राया । अनन्तरसङ्गतिस्तु, गताधिकरणोक्तसर्वगतत्वाक्षेपेण पूर्वपक्षोत्थानादिति भाष्य एवोक्ता । अत्र वैश्वानरः किमग्न्यादिः किं वा ब्रह्मेति चिन्ता ।

प्रकाशः

रत्नावल्युक्तेश्चेति भावः । एतेन नामत्वे फलतः, लिङ्गत्वे साक्षादेवैतत्पादान्तर्भावोऽस्य सूचितः । एवं "लोकतोऽन्यत्र" इत्यादिटीकां व्याख्याय "श्रुत्यादिसङ्गतिं" इत्यादिटीकां व्यनक्ति— **अनन्तरेति** । पूर्वाधिकरणतद्विषयवाक्याभ्यां एतदधिकरणतद्विषयवाक्ययोरित्यर्थः । आक्षेपप्रकारश्चाग्रे स्पष्टः । न च तद्भाष्यं प्रयोजनमात्रपरं, उभयपरत्वे बाधकाभावादिति भावः । एतेन—

सार्वात्म्यरूपोपन्यासादक्षरं ब्रह्म वर्णितम् ।
जाठरादावनैकान्त्यशङ्का तस्य निरस्यते ॥

इति कल्पतरूक्तसङ्गतिर्निरस्ता वेदितव्या । वैश्वानरनामसन्निहितोन्मादत्वमुखेन पूर्वत्र प्रधानसूत्रप्रतिज्ञोपात्तसर्वगतत्वाक्षेपसम्भवेऽपि ईदृशस्यायुक्तत्वात् । सार्वात्म्यरूपशब्दाप्रयोगेण तद्रीत्या सार्वात्म्यस्य "रूपोपन्यासात्" इति सूत्रार्थतया वर्णनायोगस्योक्तत्वाच्चेति । विषयसंशयटीकां व्यनक्ति **अत्रेति** । छान्दोग्ये पञ्चमेऽध्याये वैश्वानरविद्यायां प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलोद्दालकाः समेत्य मीमांसां चक्रुः "को न आत्मा किं ब्रह्मेति । ते मीमांसमाना निश्चयमलभमानाः कैकयं राजानमुपसद्योचुः, आत्मानमेव वैश्वानरं

प्रकाशः

संप्रत्यध्येषि तमेव नो ब्रूहि" इत्युपक्रम्य श्रूयते "यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्दोहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इत्यादि। तथा वाजसनेये सप्तमे "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते" इत्यादि। तथा वैश्वानरसूक्ते—

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥

इत्यादि। तत्र सर्वत्र श्रुतो वैश्वानरो विषय इत्यर्थः। अत एव टीकायां 'स वैश्वानरः" इति तच्छब्देन सङ्गत्यर्थं पूर्वप्रकृतच्छान्दोग्यस्थवैश्वानरप्रतीतावपि तदुपलक्षणमिति भावेन 'वैश्वानरः" इति सामान्योक्तिः। 'वैश्वानरः' इत्युपलक्षणं, प्राक् पादद्वयेन समन्विता अशेषविद्यागताः अशेषसूक्तस्था अग्न्यादिनामशब्दा अपि उदाहरणमिति ध्येयम्, प्राचीनसर्वनयोक्ताक्षेपसमाधानार्थत्वादस्याधिकरणस्य। अत एवाग्रे "अग्निवैश्वानरादिशब्दानां" इत्युक्तिः, "वैश्वानरादयश्शब्दा अपि तद्वाचिनः" इत्यनुव्याख्याने सुधायां 'वैश्वानरादयः' इत्यादिशब्दप्रयोगाद्वैश्वानरशब्दस्योपलक्षणत्वमिति

चन्द्रिका

तदर्थे अग्निवैश्वानरादिशब्दानां ब्रह्मणि मुख्यत्वेऽग्न्यादिशब्दानां प्रसिद्धाग्न्यादौ लौकिकव्यवहारः, तत्तत्सूक्तानां तत्तद्विद्यानां च ब्रह्मपरत्वे वैदिकसूक्तव्यवस्था विद्याव्यवस्था च न युक्ता उत युक्तेति ।

प्रकाशः

दर्शयति " इत्युक्तम् । आत्मशब्दादिसाधकोपेतत्वेन प्राधान्यात्सूत्रादौ तस्यैवोक्तिः । **अग्नीति** । देवतेत्यर्थः । आदिपदेन भूताग्निः । एतेन टीकायां "अन्यो वा" इत्युक्तान्यशब्दार्थो विवृतः । अत्र '**ब्रह्म**' इति चिन्तानन्तरं, वैश्वानरश्रुतेरन्यत्रप्रसिद्ध्यनुसारेण समाख्याप्रकरणलिङ्गानि विष्णुप्रापकाण्यग्नौ नेयानि उत तदनुसारेण प्रसिद्धिर्नेयेति चिन्ता, तदर्थे समाख्याद्यनुरोधेन प्रसिद्धेर्नयने बाधकमस्त्युत नेति चिन्ता टीकायां पूर्वोत्तरप्रापकयोस्तौल्योक्तेस्तामनुसृत्य नोक्ता । स्वरीत्या तु वक्तव्यैव । रीतिद्वयसाधारण्येन तु श्रुत्यादिकं ब्रह्मणि नेतुं न शक्यं उत शक्यमिति चिन्ता ध्येया । एतदुपयुक्तां प्रसिद्धेर्निरवकाशत्वरूपां चिन्तामाह—**तदर्थमिति** । **मुख्यत्व इति** । सिद्धान्तिना लक्षणादेरनङ्गीकारादेवमुक्तम् । यदि वक्ष्यमाणदिशा न युक्ता, तदा निरवकाशलोकप्रसिद्ध्यादिवशादग्न्यादिरेव वैश्वानरादिशब्दार्थः । यदा तु "साक्षादप्यविरोधं" "अभिव्यक्तेः" इत्यादिवक्ष्यमाणदिशा युक्ता, तदा बाधकाभावात्समाख्यादिवशाद् ब्रह्मैवेति सिद्धान्ते फलफलिभावोऽग्रे पूर्वपक्षादिविवरणरीत्या स्पष्ट इति भावः ।

चन्द्रिका

पूर्वपक्षस्तु— "आत्मानं वैश्वानरमुपास्ते" "अयमग्निर्वैश्वानरः" इत्यादौ श्रुतो वैश्वानरोऽग्निदेवता वा भूतं वा, वैश्वानरश्रुतेस्तत्र प्रसिद्धेः।

प्रकाशः

अत्र टीकायां "श्रुतेरपि प्रसिद्धितो निरवकाशत्वात्" इत्यादिना श्रुतेर्निरवकाशत्वमात्रप्रयुक्तप्राबल्योक्तिप्रतीतावपि "लिङ्गस्य श्रुतितो दुर्बलत्वात्" इति पूर्ववाक्येन श्रुतित्वप्रयुक्तप्राबल्यमपि अभिमतम्। एवञ्च वैश्वानरश्रुतेः श्रुतित्वनिरवकाशत्वरूपोभयप्रयुक्त प्राबल्यात्पाचकत्वादिलिङ्गस्य निरवकाशत्वनिमित्तप्राबल्यात्, एवं प्रबलश्रुतिलिङ्गबलेन समाख्याप्रकरणलिङ्गरूपविष्णुप्रापकाणां बाधादग्निरेव **वैश्वानरः। टीकायां पूर्वोत्तरपक्षप्रापकयोर्द्वयोरपि निरवकाशत्वेन तौल्योक्तिरस्त्वभ्युपेत्यवादेनेति** भावेन "नायं वैश्वानरो विष्णुः किन्तु" इत्यादिटीकां विवृण्वन् पूर्वपक्षयति— **पूर्वपक्षस्त्विति**। टीकायां 'अयं' इत्युक्त्या प्राक् प्रकृतच्छान्दोग्यस्थस्य परामर्श उपलक्षणमिति भावेन च्छान्दोग्यबृहदारण्यकस्थयोर्वाक्यविशेषयोरुक्तिः "आत्मानं" इति "अयमग्निः" इति च। आदिपदेन "वैश्वानरमृत आजातमग्निं" इत्यस्यामृचीति गृह्यते। "अत एव न देवता भूतं च" इतिसूत्रव्याख्यमाह— **अग्निदेवतेति। भूतमिति।** तेजोरूपं जडमित्यर्थः। "न च वाच्यं सर्वगतत्वलिङ्गात् वैश्वानरो विष्णुः" इति टीकोपलक्षणं

चन्द्रिका

न च "अहं वैश्वानरः" इति स्मृतिसमाख्यानात्पुरुषसूक्तसमाख्यानात् "को न आत्मा किं ब्रह्म" इति प्रकरणात् "सर्वे पाप्मानः प्रदूयन्ते" इति स्वज्ञानेन सर्वपाप्मप्रदाहसर्वगत्वादिलिङ्गाच्च वैश्वानरो ब्रह्मेति वाच्यं, समाख्याप्रकरणलिङ्गानां श्रुतितो दुर्बलत्वात् ।

प्रकाशः

सूत्रोक्तसाधकमात्रस्येति भावेन तां व्याचष्टे **न चेति** । "स्मर्यमाणं" इति सूत्रोपात्तात् "अहं वैश्वानरो भूत्वा" इति स्मृतिसमाख्यानात्, "पुरुषविधमपि" इति सूत्रांशोक्तात् "शीर्ष्णो द्यौः समवर्तत" इति पुरुषसूक्तसमाख्यानात्, "असम्भवात्" इति सूत्रखण्डोक्तात् "को न आत्मा" इति ब्रह्मप्रकरणादित्यर्थः । "असम्भवात्पुरुषविधमपि" इत्यंशोक्तप्रकरणश्रुतिसमाख्याभ्यां उपलक्षणत्वेन उपात्तलिङ्गान्यप्याह— **सर्वे इति** । अभिविमानपदेन अभितो विगतं मानं मर्यादा यस्येति टीकोक्तव्युत्पत्त्योक्तं सर्वगतत्वम् । एतेन "अन्तरधिकरणन्यायेन विष्णावपि श्रुतेर्वृत्तिरस्तीति चेत्" इति न्यायविवरणटीकोक्तन्यायो विष्णुप्रापकसत्त्वरूपो विवृतः । "लिङ्गस्य श्रुतितो दुर्बलत्वात्" इत्यपि टीकावाक्यमुपलक्षणत्वेन वा, कैमुत्यलब्धत्वाभिप्रायेण वा व्याचष्टे—**समाख्येति** । **श्रुतित इति** । वैश्वानरश्रुतित इत्यर्थः । सर्वापेक्षया श्रुतिप्राबल्यस्य "शब्दादेव प्रमितः" इत्यत्र सेत्स्यमानत्वादिति भावः । अन्तर्नये तु निरवकाशलिङ्गेन श्रुतिबाधः नात्र तथेति भावः । यद्यपि सिद्धान्ते समाख्यादिकमिव "अभिविमानमात्मानं" इत्यात्मश्रुतिरप्यस्ति । तथाऽपि

चन्द्रिका

बहुत्वप्रयुक्तप्राबल्यादपि स्वभावप्राबल्यस्य बलवत्त्वाच्च । उक्तं हि—

द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः ।
तयोस्स्वभावो बलवान् उपजीव्यादिकश्च सः ॥

प्रकाशः

तदाच्छादनेन वा वक्ष्यमाणदिशा निरवकाशया परप्राबल्यन्यायेन प्रबलया चरमवैश्वानरश्रुत्या पूर्वस्य आत्मशब्दस्य कथञ्चिन्नेयत्वादिति वा, तस्याप्यग्न्यादिशब्दवद्विष्णौ मुख्यत्वं नेति वाऽभिप्रायेण तदनुक्तिः । तथा च वक्ष्यति "आत्मश्रुतेश्च न ब्रह्मणि मुख्यता" इति । "न च लिङ्गस्य निरवकाशत्वेन प्राबल्यात् श्रुतिबाधकत्वं" इति शङ्कोत्तरे अप्युपलक्षणमिति भावेन स्वयं समाख्यादीनां बहुत्वात् प्राबल्यमिति शङ्कान्तरं हृदि कृत्वा समाधिमाह—बहुत्वेति । उक्तं हीति । विष्णुतत्त्वनिर्णयोदाहृतब्रह्मतर्कवाक्य इत्यर्थः । 'सः' स्वभावः उपजीव्यत्वनिरवकाशत्वश्रुतित्वरूप इत्यर्थः । यद्यपि पूर्वपक्षेऽपि वैश्वानरश्रुतिरिव "अयमग्निः" इत्याद्यग्निश्रुतिः, "वैश्वानरे तद् हुतं भवति हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति "येनेदमन्नं पच्यते" इत्यादिना श्रुतानि होमाधिकरणत्वगार्हपत्याद्यङ्गकत्वपाचकत्वादिलिङ्गानि च सन्तीति प्रापकबाहुल्यमस्ति । तथाऽपि टीकायां "श्रुतितः" इत्युक्त्यनुरोधेन तन्मात्रेणैव बहुत्वकृतप्राबल्यस्य बाध उक्तः । एवं श्रुतेः श्रुतित्वप्रयुक्तप्राबल्यमुपपाद्य इदानीं निरवकाशत्वेनापि प्राबल्यं

चन्द्रिका

इति । न चान्तराद्यधिकरणन्यायेन वैश्वानराग्न्यादिश्रुतिः ब्रह्मणि मुख्येति सावकाशा, लिङ्गं तु निरवकाशमिति वाच्यं, तथात्वे श्रुतेरन्यत्र प्रसिद्ध्ययोगात् ।

प्रकाशः

वक्तुं ' अन्तराधिकरणन्यायेन विष्णावपि श्रुतेः वृत्तिरस्तीति चेत् '' इति न्यायविवरणटीकोक्तमत्रापि ग्राह्यमिति भावेन ' न च लिङ्गस्य '' इत्यादिटीकां व्याचष्टे— **न चेत्यादिना । अन्तरादीति ।** '' अन्तस्तद्धर्म '' इत्यत्राधिदैवगताशेषनाम्नां निरवकाशलिङ्गेन विष्णौ मुख्यत्वोक्तेः, ' चेतोर्पणनिगदात् '' इत्यत्र अशेषनाम्नां विष्णावुपासनार्थत्वोक्तेः, '' ज्योतिश्चरण '' इत्यत्राशेषसूक्तस्थाग्निज्योतिरादिशब्दानां विष्णौ मुख्यत्वोक्तेरिति भावः । केचित्तु— '' अन्तर उपपत्तेः '' इत्यत्राग्निप्रयुक्ताहंशब्दस्य विष्णौ मुख्यत्वोक्तेस्तन्न्यायेनेत्यर्थ इत्याहुः । तच्चिन्त्यं, '' शास्त्रदृष्ट्या '' इत्यत्रैव मुख्यत्वसिद्ध्या अत्र भाष्यादौ तस्यैव स्मरणात् । तावताऽग्निशब्दस्य विष्णौ मुख्यत्वासिद्धेश्चेति । '' अन्तराधिकरणन्यायेन '' इति क्वचित्पाठः । **तथात्व इति ।** लिङ्गनिरवकाशत्वेन श्रुतेर्ब्रह्मणि मुख्यत्व इत्यर्थः । तथा च निरवकाशया श्रुत्या लिङ्गमेवाग्नौ सावकाशयितव्यमिति भावः । यद्यपि प्राक् समाख्यादिकमपि प्रकृतम् । तथाऽपि टीकायां '' लिङ्गस्य निरवकाशत्वेन '' इति लिङ्गमात्रोक्तेस्तदनुरोधेन वा, लिङ्गनिरवकाशत्वेन निरवकाशश्रुतिबाधो नेति

चन्द्रिका

न च "जगद्वाचित्वात्" इति वक्ष्यमाणन्यायेन लौकिकैरन्यत्रैव शब्दव्यवहारात् प्रसिद्ध्युपपत्तिरेति वाच्यं ब्रह्मणि मुख्यत्वे अन्यत्र

प्रकाशः

सिद्धौ तादृशसमाख्यानादिना नेति कैमुत्यसिद्धत्वाद्वा, पूर्वत्र 'अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिङ्गात्" "अत एव प्राणः" इत्यादौ सर्वत्र लिङ्गनिरवकाशत्वमाश्रित्य श्रुतेर्ब्रह्मणि मुख्यत्वोक्तेस्तत्सर्वाक्षेपाय तत्साधारण्योक्त्यर्थत्वाद्वा लिङ्गमात्रोक्तिः। तथा चा वक्ष्यति— "अतीतसर्वाधिकरणाक्षेपः" इति। टीकायां लिङ्गमात्रोक्ताविदमेव बीजमित्याहुः। "न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ति" इति टीकां विवरीतुं सम्भावितगत्यन्तरमाशङ्क्य निराह—**न चेति**। चतुर्थपादे "समाकर्षात्" इत्याधिकरणे शब्दानां विष्णावेव मुख्यत्वेनान्यत्र अमुख्यत्वापत्त्या माणवकादावग्न्यादिशब्दप्रसिद्ध्यदर्शनेनान्यत्रप्रसिद्ध्ययोगात्, विष्णावेव प्रसिद्ध्यापत्तेश्चेति शङ्कायां लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेर्विष्णौ तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेः 'अग्निर्माणवकः' इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवके अग्निशब्दव्युत्पत्त्या तस्य तत्रैव प्रसिद्धिवदनवगतभगवद्रूपमुख्यार्थस्य भगवदज्ञानमूलत्वेन अन्यथोपपत्तेरिति "जगद्वाचित्वात्" इति गुणसूत्रोक्तन्यायेनेत्यर्थः। "साक्षादप्यविरोधं" इति सूत्रव्याख्यमाह—**ब्रह्मणीति**। एतेनात्र

चन्द्रिका

प्रसिद्धिव्यवहारस्यैवायोगात् । यदि च " शरीररूपकविन्यस्तगृहीतेः " इति वक्ष्यमाणन्याये मुख्यार्थभूतब्रह्मसम्बन्धादन्यत्र प्रयोगः, तर्हि गङ्गादिशब्दानां तीरादाविव अन्यत्र लक्षणादिः स्यात् ।

प्रकाशः

नयेऽन्यत्र व्यवहारे " साक्षात् " इति सूत्रेणोक्ते सति, तस्य गत्युक्तिस्तत्र युज्यते । स एवायमयुक्त इत्याक्षिप्यत इति तेन गतार्थत्वमपि नेति दर्शितम् । तथा चानुवक्ष्यति " समाकर्षात् " इत्यत्र टीकायां " सर्वशब्दानां परमात्मैकवाचित्वे अन्यत्र व्यवहाराभावात् " इति । " साक्षात् " इति सूत्रव्यावर्त्यं अन्यत्र व्यवहारायोगमाशङ्कते—**यदि चेति** । " आनुमानिकमप्येकेषामिति चेन्न शरीररूपक ' इति नये अव्यक्तादिशब्दवाच्यं विष्णुरन्यद्वेति संशये, अव्यक्तादिशब्दानां प्रधानादावेव प्रसिद्धेः, परमात्मैकवाचित्वे प्रधानादौ तद्व्यवहाराभावापातात्, अवाचकत्वेऽप्यनभिज्ञानादिना व्यवहारे च अव्यवस्थापातात् अन्यदिति प्राप्ते, परमात्मतन्त्रत्वेन शरीरसमे प्रधानादौ तत्तच्छब्दवाच्यस्य परमात्मनो विन्यस्ततया तत्सम्बन्धेन तत्रापि शब्दप्रवृत्त्युपपत्तेः, प्रधानादितत्तद्वस्तुविशिष्टस्यैव विष्णोरव्यक्तादिशब्दवाच्यत्वस्वीकारेण तत्तच्छब्दमुख्यार्थेश्वरसम्बन्धस्य तत्र तत्र व्यवस्थिततया अन्यत्र व्यवहाराव्यवस्थानापत्तेः, विष्णुरेवाव्यक्तादिशब्दमुख्यार्थ इति चतुर्थपादे वक्ष्यमाणन्यायेनेत्यर्थः । " तथा सति लोके लक्षणेतरवृत्त्यभावापत्तेः " इति समाकर्षनयस्थटीकावाक्यं हृदि कृत्वाऽऽह — **तर्हीति** । गौणी-

चन्द्रिका

तथा च ब्रह्मणि मुख्यानामिन्द्रादिशब्दानां अग्न्यादौ अग्न्यादिशब्दानां चेन्द्रादौ प्रयोगस्स्यात् ।

प्रकाशः

वृत्तिरादिपदार्थः । टीकोपलक्षणमिति सूचितम् । मुख्यार्थसम्बन्धनिमित्तेन शब्दप्रयोगस्य तादृशत्वादिति भावः । अस्तु को दोष इत्यत आह—**तथा चेति** । यद्यपि लोके शब्दव्यवहाराव्यवस्थानिवर्तकं "शरीररूपकविन्यस्तगृहीतेः" इत्येतदेव, न ततोऽन्यदस्ति । अत एव टीकायां "अवाचकैर्व्यवहारेऽव्यवस्थापातात्" इति समाकर्षनये, "अवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवहारप्रसङ्गात्" इत्यव्यक्तनये च अव्यवस्था "शरीररूपक" इत्यादिसूत्रांशव्यावर्त्यतयैवोक्ता, प्रागुक्तदिशा व्यवस्थासमर्थनं च सुशकम् । तथाऽपि टीकायां "अवाचकैः" इति "अवाचकत्वाविशेषेण" इति च अव्यवस्थायामवाचकत्वस्य निमित्ततयोपादानात, "—"समाकर्षात्" इति वक्ष्यमाणन्यायस्य अत्राभिप्रेतत्वेन लक्षणानाश्रयणात्" इत्यानुमानिकसूत्रटीकोक्तदिशा "शरीररूपक" इत्याद्यंशतात्पर्यार्थानभिज्ञानेन, यथा "तथा सति लोके लक्षणेतरवृत्त्यभावापत्तेः" इति समाकर्षसूत्रे पूर्वपक्षिण आपादनं, तथा विशेषानभिज्ञस्य तत्तच्छब्दमुख्यार्थभूतेश्वरसम्बन्धस्य सर्वत्र सत्त्वादित्येतावन्मात्रं जानतः पूर्वपक्षिणः एतदव्यवस्थापादनमिति ध्येयम् । अत एव टीकादौ "शरीररूपक" इति सूत्रे न व्यवस्थासमर्थनं

चन्द्रिका

न हि तीरपुरुषमाणवकचित्रलिखितसिंहादौ गङ्गामञ्चाग्निसिंहशब्दा एव प्रयुज्यन्ते, न तु रूढ्या योगेन वा गङ्गादिवाचिपदान्तराणीति नियमोऽस्ति। अन्यथाऽग्न्यादौ वह्न्यादिशब्दस्याप्यप्रयोगः स्यात्। न च "समाकर्षात्" इति वक्ष्यमाणन्यायेन

प्रकाशः

स्पष्टमुक्तम्। अस्माभिस्तु—पूर्वं विवेकार्थं स्पष्टमुक्तम्। अन्यथा लक्षणादिवृत्त्युपादानस्यानिष्टत्वं न सिध्येत्। अस्य समाधिस्तु "कल्पनोपदेशात्" इत्यादावन्यत्रापि वाचकत्वोक्त्या भविष्यति। अत एवाग्रे "वाचकत्वाविशेषेऽपि" इति वक्ष्यते। 'तीर' इति सप्रयोजनलक्षणायाः, 'पुरुष' इति रूढलक्षणायाः, 'माणवक' इति सप्रयोजनोपचारस्य, "चित्रलिखितसिंहादौ" इति तु रूढोपचारस्योदाहरणम्। तीराद्यन्यलाक्षणिकादिरादिपदार्थः। एतेन 'लक्षणादिः' इत्यादिपदार्थो विवृतः। **न त्विति**। 'नद्यां घोषः, सुरसरिति घोषः' इत्यादेरपि दर्शनादिति भावः। **अन्यथेति**। एक एव शब्दो लक्षणीये प्रयोज्यो, न तु तत्पर्याय इत्यङ्गीकार इत्यर्थः। **वह्न्यादीति**। तस्यापि विष्णौ मुख्यस्यान्यत्र लक्षणादिनैव वृत्तेरिति भावः। ननु न शब्दानां ब्रह्मणि मुख्यत्वेऽप्यन्यत्र लक्षणादि, येनाव्यवस्था, किन्तु तत्रापि "कल्पनोपदशात्" इति न्यायेन मुख्यत्वमेव। न चाक्षादिशब्दवदुभयत्र साम्यापत्तिः, न्यूनाधिकभाववत्त्वादिति भावेन शङ्कते—**न चेति**।

चन्द्रिका

वाचकत्वाविशेषेऽपि राज्ञि भृत्ये च, जयिशब्दस्येव, अग्न्यादिशब्दानां ब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वं चेति युक्तं, 'भृत्यो जयी' इत्यत्र हि भृत्यशब्दस्य भृत्ये मुख्यत्वात्तदन्वयाय जयिशब्दस्यामुख्यता। ब्रह्मणोऽन्यत्र तु कश्चिदपि शब्दो न मुख्योऽस्ति, यदन्वयाय शब्दान्तरस्यामुख्यता। एतेन ह्वानादिव्यवहारायान्यत्र प्रयोग इति परास्तम्। अग्निव्यवहारस्याग्निशब्देनैव सिद्धेर्वह्न्या-

प्रकाशः

'इति न्यायेन ब्रह्मणि मुख्यत्वमन्यत्रामुख्यत्वं' इत्यन्वयः। तत्र हि, मुख्यता किमुभयत्र तुल्या किं ब्रह्मण्यधिका अन्यत्र हीनेति संशये, हीनत्वे मुख्यवृत्तित्वाभावात् तुल्येति प्राप्ते, योगरूढ्योरिव मख्यत्वेऽपि न्यूनाधिकभावसम्भवात्, ब्रह्मणि परममुख्यत्वमन्यत्र त्वपरममुख्यवृत्तित्वमिति वक्ष्यते, तेन न्यायेनेत्यर्थः। **वाचकत्वाविशेषेऽपीति**। "कल्पनोपदेशात्" इति न्यायेन हरौ तदन्यत्र चेति भावः। **अमुख्यत्वमिति**। किञ्चिन्मुख्यत्वं न तु लक्षणादिरित्यर्थः। **न मुख्योऽस्तीति**। सर्वशब्दानां लोके तुल्यवृत्तित्वेन भृत्यजयिशब्दयोरिव भृत्ये वृत्तितारतम्याभाव इत्यर्थः। एतेनेत्युक्तं व्यनक्ति-**अग्नीति**। एवं श्रुतेर्निरवकाशतयाऽपि प्राबल्योपपादनेन "न हि वैश्वानरश्रुतेरग्न्यादिविषयत्वाभावे व्यवहारस्य गत्यन्तरमस्ति" इति टीकाविवरणेन "साक्षात्' इति सूत्रव्यावर्त्यमुक्त्वेदानीं 'शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेत्" इति सूत्रांशोक्तलिङ्गनिरवकाशत्व-

चन्द्रिका

दिशब्दाप्रयोगापातात् । अत एव पाचकत्वाद्यग्निलिङ्गानामात्मश्रुतेश्च न ब्रह्मणि मुख्यता, अन्यत्राप्रयोगापातात् । किञ्चेन्द्राग्न्यादिशब्दानां ब्रह्मण्येव मुख्यत्वे सूक्तव्यवस्था, विद्याव्यवस्था च न स्यात्, अमुख्यवृत्त्या तद्व्यवस्थाया निरस्तत्वात् । टीकादौ वैश्वानर-

प्रकाशः

मप्यत्र ग्राह्यमिति भावेनाह—**अत एवेति** । प्रागिवृतान्यस्माभिर्लिङ्गानि । **आत्मश्रुतेश्चेति** । एतेन "शब्दादिभ्यः" इति सूत्रभाष्यटीकायां—"यथा खलु वैश्वानरस्य विष्णुत्वनिश्चायकात्मशब्द दि विद्यते" इत्यादिना लिङ्गानां विष्णुप्रापकात्मशब्दसमाख्यादिना साम्यमुक्तं, तत्त्वभ्युपेत्यवादेन वा, "साक्षात्" इत्यादावग्नेरन्यत्र प्रयोगोपपत्तेर्वक्ष्यमाणत्वेनात्मश्रुत्यादेः विष्णौ मुख्यत्वस्य निर्बाधादिति भावेन वेति भावः । अत एवेत्युक्तं व्यनक्ति—**अन्यत्रेति** । "अभिव्यक्तेः" इत्यादिसूत्रव्याख्यावसरोक्तिपरां "वैदिकविद्याभेदव्यवहारविरोधाच्च" इति टीकां विवृणोति—**किञ्चेत्यादिना** । इदमग्निसूक्तमिदं वायुसूक्तमित्यादिसूक्तव्यवस्था, तथा इयमात्मविद्या इयं वैश्वानरविद्या इयमक्षिविद्या इयं प्राणविद्या चेत्यादिविद्याव्यवस्था च न स्यादित्यर्थः । **निरस्तत्वादिति** । ब्रह्मणि मुख्यानामिन्द्रादिशब्दानां" इत्यादिना निरस्तप्रायत्वादित्यर्थः । नन्वग्निश्रुत्यादेर्विष्णुप्रापकात्प्राबल्योक्तौ सूत्रभाष्यटीकाविरोध इत्याशङ्क्याह—**टीकादाविति** । जात्या निरवकाशत्वेन च श्रुतेः प्राबल्यं

चन्द्रिका

श्रुतेस्साधारण्योक्तिस्तु श्रुतित्वप्रयुक्ते विशेषे सत्येव श्रुतिलिङ्ग-योर्निरवकाशत्वप्रयुक्तसाधारण्यमभिप्रेत्य । टीकायां लिङ्गस्य निरव-काशत्वोक्तिरपि स्वतोऽवकाशाभावाभिप्राया, अन्यथा 'सर्वगतत्वं च न तस्य' इति टीकाविरोधात् । "न तु लिङ्गेन विष्णुपरता-निश्चयः" इति टीकायामपि 'किन्तु प्रसिद्ध्याऽग्न्यादिपरत्व-निश्चयः" इति शेषः । यद्वा— टीकादिस्वारस्याय विष्णुपरत्वानध्य-

प्रकाशः

स्वयमुक्तं, टीकादौ तु सौत्रसाधारणशब्दस्वारस्यमनुरुध्य जात्या प्राबल्यमनुपपाद्य श्रुतेर्लिङ्गस्य निरवकाशत्वेन साम्यमुपेत्य साधारण्य-मुक्तं, जात्या बलवत्त्वमस्मदुक्तरीत्याऽनुमतमेव । अतो न विरोध इति भावः । **श्रुतिलिङ्गयोरिति** । वैश्वानरश्रुतिसर्वगतत्व लिङ्गयोरित्यर्थः । ननु टीकोक्तरीत्या लिङ्गस्य निरवकाशत्वे वैश्वा नरोऽग्निरेवेति कथं निर्णयेन पूर्वपक्षः, श्रुत्या लिङ्गबाधो वा कथमित्यत आह—**टीकायामिति** । सिद्धान्तदिशेत्यर्थः । वस्तुतः पूर्वपक्षे सर्वगतत्वलिङ्गमग्नौ सावकाशमिति टीकाशयः । एवं तर्हि विष्णुरेवेति सिद्धान्त्यभिमतनिर्णयाक्षेपपरग्रन्थः कथमित्यत आह—न **त्वित्यादि** । एवं स्वोक्तरीत्या श्रुतित्वनिरवकाशत्वोभय-प्रयुक्तप्राबल्यं टीकायामप्यभिमतमित्युपेत्य टीकावाक्यानि तदनुगुणतया व्याख्याय, इदानीं पक्षान्तरमाह—**यद्वेति** । टीकादौ जात्या प्राबल्यं, श्रुतेरनुक्त्वा निरवकाशत्वमात्रेण श्रुतिलिङ्गयोः साम्यमुपेत्य

चन्द्रिका

वसायेन पूर्वपक्षोऽस्तु । एवञ्च पक्षद्वयेऽप्यतीतसर्वाधिकरणाक्षेपः । अत एवास्य पादद्वयान्त्यतेति ॥

सिद्धान्तस्तु—

प्रकाशः

विष्णुरेव वैश्वानर इति विष्णुपरतानिश्चयो न युक्त इत्युक्तं, तत्स्वारस्यानुरोधेनेत्यर्थः । पूर्वपक्षफलमाह— **एवञ्चेति** । स्वाभिमतश्रुतेः द्वेधा प्राबल्यपक्षे निरकाशत्वप्रयुक्तप्राबल्यपक्षे चेत्यर्थः । यथा नामधेयपादे उद्भिदादिचतुरधिकरण्या वाजपेयनयपूर्वपक्षे तथेति भावः । द्वितीयपक्षेऽपि सर्वत्र सिद्धान्त्यभिमतनिर्णयाक्षेपादिति भावः । टीकादौ पूर्वाधिकरणाक्षेपः सङ्गतिप्रदर्शनायेति भावः । उक्तं च तत्त्वप्रदीपे "पादद्वयार्थनिगमनाय सर्वनाम्नां सर्वलिङ्गानां च समन्वयदृढीकरणात्मकोऽयमधिकरणराज आरभ्यते" इति ॥

आत्मशब्दश्रुतिस्मृतिसमाख्याप्रकरणाभिविमानत्वादिलिङ्गानां वैश्वानरस्य विष्णुत्वसाधकानां वैश्वानरादिश्रुत्यादेरन्यत्र व्यवहारान्यथानुपपत्त्या सूक्तादिभेदव्यवहारान्यथानुपपत्त्या च विष्णुत्वासाधकत्वोक्तेः व्यवहारस्य गत्युक्त्यैव आत्मशब्दादिबलाद्वैश्वानरो विष्णुरिति भाष्यटीकारीत्या सिद्ध्यतीति भावेन, व्यवहारस्य गत्युक्तिपरां "अनन्ययोगेन ब्रह्मवाचकैरपि तैर्ज्ञानिनो ज्ञानादिसिद्ध्यर्थमन्यत्र अग्न्यादौ व्यवहरन्ति" इत्यादि "साक्षात्" इत्यादिसूत्रभाष्यटीकां विवृण्वन्

चन्द्रिका

अज्ञास्त्वज्ञानतः शब्दानन्यत्रैव प्रयुञ्जते ।
ज्ञानिनोऽपि च हानादिव्यवहारप्रसिद्धये ॥

अज्ञानिन इव ज्ञानिनोऽप्यन्यत्र हानादिव्यवहारस्यापेक्षितत्वात्, तस्य च शब्दप्रयोगाधीनत्वात्, ब्रह्मण्यमुख्यस्यान्यत्र मुख्यस्य च शब्दस्याभावादन्यगतिकतयाऽन्यत्रापि प्रयुञ्जते, जातिश्शब्दार्थ इति मते जातौ मुख्यानपि शब्दान् हानादिव्यवहाराय व्यक्ताविव । अग्न्यादाविन्द्रादिशब्दप्रयोगे च व्यवहारव्यवस्था न

प्रकाशः

तदुक्तप्रमेयं सङ्गृह्याह—**अज्ञास्त्विति** । अज्ञानां मुख्यार्थाज्ञानतोऽन्यत्र प्रयोगेऽपि ज्ञानिनां कुतस्तत्र प्रयोगः, हानादिव्यवहारस्य अन्येनापि सम्भवादित्यत उत्तरार्धं व्यनक्ति—**अज्ञानिन इवेति** । एतेन पूर्वार्धस्योपयोगो दर्शितः । तमग्रे स्पष्टयिष्यामः । यद्वा—अत्रभाष्यादावनभिज्ञानादन्यत्र व्यवहारोक्तिः "जगद्वाचित्वात्" इति सूत्रसिद्धस्येह दृष्टान्तत्वेनेति सूचनाय 'अज्ञानिन इव" इत्युक्तम् । यद्वा—अन्यत्र व्यवहारो न स्यादित्येतदज्ञानिनो ज्ञानिनो वेति विकल्प्य श्लोके द्वयोर्गत्युक्तिः । 'नेदं' रजतं तस्माज्जहीहि इदं रजतमुपादत्स्व' इत्यादिव्यवहारस्य शब्दैकसाध्यत्वादित्यर्थः । **अन्यत्रापीति** । एतेन श्लोके चाऽप्यर्थोऽनुवृत्तेन 'अन्यत्र' इति पदेनान्वेतीति सूचितम् । **मत इति** । भट्टमते । प्रागुक्तातिप्रसङ्गं निराह—**अग्न्यादाविति** । अज्ञानां सर्वशब्दमुख्यार्थेश्वराज्ञानतः

चन्द्रिका

स्यात् । न चाग्न्यादौ वह्न्यादिशब्दानामिवेन्द्रादिशब्दानामपि शक्तिरभिधानादिसिद्धा । 'अग्निर्दुःखी' "अग्निर्वै देवानामवमः" इत्यादौ च तद्गतत्वेन विवक्षितदुःखित्वाद्यनुपपत्तेः भृत्ये जयिशब्दस्येवाग्निशब्दस्यान्यत्रामुख्यता । अन्यथा अलौकिकमग्न्यादिस्वरूपमेव न

प्रकाशः

अन्यत्रैव शब्दव्यवहारात् तस्य चासङ्कीर्णत्वाय व्यवस्थयैव शब्दप्रयोगात, प्राज्ञा अपि तत्प्रहाणेन शब्दान्तरोपादाने कृत्याभावात् बहुलप्रयोगानुसार्यभिधानादिसिद्धशब्दशक्त्यनुसाराच्च व्यवस्थयैव शब्दान् प्रयुञ्जते, तदर्थत्वाच्छब्दप्रयोगस्येत्यर्थः । यदप्यग्न्यादौ वह्न्यादिशब्दस्याप्यप्रयोग इति तत्साम्यापादनं, तत्र तद्वैषम्यमाह— **न चेति** । एतेन जयिशब्दस्य राजभृत्ययोरिव वह्न्यादिशब्दानां "कल्पनोपदेशात्" इति न्यायेन जगद्ब्रह्मवाचकत्वाविशेषेऽपि न्यूनाधिकभावेन उभयत्र शक्तिरेवेति सूचितम् । यदत्रोक्तं जयिशब्दवैषम्यं, तत्राह— **अग्निर्दुःखीति** । दुःखादिस्वामित्वेन दुःखित्वमीशेऽपि युक्तमित्यतः— **तद्गतत्वेनेत्युक्तम्** । तद्गतनीचत्वापादकत्वेनेत्यर्थः । 'अन्यथा' अमुख्यतोऽपि तत्राप्रयोगे । प्रत्यक्षादिसिद्धानां निराह— **अलौकिकेति** । एवं "साक्षादप्यविरोधं जैमिनिः" इति सूत्राभिप्रेतमन्यत्र व्यवहारसमर्थनमुपपाद्य "अभिव्यक्तेरित्याश्मरथ्यः" "अनुस्मृतेर्बादरिः" "सम्पत्तेरिति जैमिनिः" इति सूत्रैरुक्तान् सूक्तादिव्यवस्थाहेतून् तत्तत्सूत्रभाष्य-

चन्द्रिका

सिध्येदिति कथं तत्र प्रयोगाभावापादनम् । सूक्तादिव्यवस्थायां तु अग्न्यादिसूक्तादिभिर्ब्रह्मोपासनायामग्न्यादावेव ब्रह्मणोऽभिव्यक्तिर्वा, अग्न्यादिसूक्ताद्युपासकैरग्न्यादावेव ब्रह्मणोऽनुस्मरणीयत्वं वा, तदुपासकानामग्न्यादिस्थब्रह्मप्राप्तिर्वा निमित्तम् । यद्यपि ऋग्भाष्ये—

पृथग्रूपाणि विष्णोस्तु देवतान्तरगानि च ।
अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ।।

प्रकाशः

टीकां विवृण्वन्नाह—**सूक्तादीति** । ननु ऋग्भाष्ये, विष्णोरग्न्याद्यन्तर्गतान्यग्न्यादिशब्दवाच्यानि कानिचिद् रूपाणि, कानिचित्तु तदनन्तर्गतानि पृथग्विद्यमानानि अग्नीन्द्रादिशब्दवाच्यानि सन्तीति भिन्नभिन्नशब्दवाच्यविष्णुरूपभेदबोधकत्वात् , विष्णुरूपैकदेवताकत्वेऽपि संज्ञाभेदात् सूक्तादिव्यवस्था युक्तेत्युक्तम् । अत्र पुनरग्न्यावधिष्ठाने अपरोक्षीभूतत्वादिकं निमित्तमुच्यते । एतच्चायुक्तं, तथात्वे 'इदं विष्णुसूक्तं इदं वामनसूक्तं इदं पुरुषसूक्तं' इति व्यवस्थाभावापत्तेः, तत्राधिष्ठानस्यैवाभावात् । सौरसावित्रादिसूक्तव्यवस्थाभावापत्तेश्च, तत्राधिष्ठानभेदाभावात् । अतोऽन्यत्र भाष्यकृदुक्तमेव समाधानं वाच्यमिति तदेव सूत्रकृताऽत्र कुतो नोक्तमिति भावेन तत्रोक्तमाशङ्क्य, तत्समर्थनपूर्वमेतदुक्तेरभिप्रायमाह—**यद्यपीति** । द्विविधानि विष्णुरूपाणि देवतान्तर्गतानि तदनन्तर्गतानि च । सर्वाणि चाग्न्यादिनामवन्ति । तत्राद्ये रूपाणां नाम्ना अधिष्ठाननाम्ना च अग्न्यादिसूक्तभेदः, अन्त्ये रूपनाम्नैवेत्युक्तमित्यर्थः ।

चन्द्रिका

इत्यग्न्यादिशब्दप्रयोगः सूक्तव्यवस्थापक उक्तः । एवञ्च यथा सामशब्दस्तद्विशेषबृहद्रथन्तरादिशब्दाश्च ऋगाश्रितगीतिविशेष एव मुख्याः, तदाश्रयनानाऋक्षु रवमुख्याः, तथैव द्वितीये उक्तत्वात्, सप्तमे उपपादितत्वात्, नवमे स्मारितत्वाच्च, एवमिन्द्राग्न्यादि-

प्रकाशः

तत्र नामादीनां भगवति मुख्यत्वमन्यत्र तत्सम्बन्धनिमित्तत्वमित्येतत् दृष्टान्तेन समर्थयते— **एवञ्चेति । द्वितीय इति ।** द्वितीये अध्याये आद्यपादे "गीतिषु सामाख्या" इति द्वादशेऽधिकरणे, यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां, तथाऽपि मन्त्रनिष्ठा गीतिरेव सामशब्दार्थ इति एतावन्मात्रमुक्तम् । तत्कथमित्याकाङ्क्षायां सप्तमेऽध्याये द्वितीयपादे "साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टं" इत्यधिकरणे "कवतीषु रथन्तरं गायति" इत्यनेन रथन्तरशब्देन कवतीषु ऋक्षु किमतिदिश्यत इति परिज्ञानार्थं, रथन्तरशब्दः किं गीतिविशिष्टानां 'अभि त्वा शूर नो नुमः' इत्यादीनामृचां वाचकः उत गीतिमात्रस्येति सन्देहे, अध्येतृप्रसिद्ध्या गीतिविशिष्टऋग्वाचक इति प्राप्ते,

विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।

इति न्यायेन गीतिमात्रस्य वाचक इत्युपपादितत्वात्, नवमे द्वितीयपादे "सामानि मन्त्रमेके स्मृत्युपदेशाभ्यां" इत्यधिकरणे सप्तमसिद्धस्यैव गीतिवाचकत्वस्योत्तरविवक्षया स्मारितत्वादित्यर्थः ।

चन्द्रिका

शब्दास्तत्तत्सूक्तानि चेन्द्राग्न्यादिगतब्रह्मरूपेष्वेव मुख्यानि, अतीतानागतानेकेन्द्रादिषु त्वमुख्यानीत्येव व्यवस्था सिद्ध्यति। अन्यथा परमतेऽपि सौरसावित्रादेरेकदेवताकत्वात् 'इदं सौरं इदं सावित्रं' इति व्यवस्था न स्यात्। तथाऽपीह सूत्रे आग्नेयादिसूक्तोपास-

प्रकाशः

उक्तं च शाबरभाष्ये—'तदेव पुनरभिधीयते स्मारणायोत्तरमधिकरणं चिन्तयितुम्। गीतिः सामेति स्थिते इदं चिन्त्यते, किं गीतिष्वृचः प्रधानभूताः किं वा गुणभूता इति। सामानि मन्त्रमेक इति पूर्वपक्षोऽपि तत्रत्यसिद्धान्तस्मारणार्थमेव इत्यादि। अत्र त्रितयोक्तिर्दार्ढ्यायेति ज्ञातव्यम्। यदत्र केनचिदुक्तं—"विशेष्यं नाभिधा गच्छेत्" इति न्यायात् गानविशिष्टऋग्वाचित्वे "कवतीषु रथन्तरं गायति" इत्यतिदेशानुपपत्त्या तत्र तथात्वेऽपि नेह तथात्वमिति, तत्तुच्छं,

तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः।
न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्॥

इत्यादिवचनजातेन "समाकर्षात्" इत्याद्युक्तन्यायेनैतत्सिद्धेरिति। **अन्यथेति**। अग्न्यादिनाशब्दप्रयोगात्सूक्तादिव्यवस्थाया अभाव इत्यर्थः। **तथाऽपीति**। नामभेदेन सूक्तव्यवस्थासिद्धावपीत्यर्थः। **परमात्मदेवताकत्वमिति**। यद्यपि तत्र "एकैव वा महानात्मा देवता सूर्य इत्याचक्षते। स हि सर्वभूतात्मा। तदुक्तमृषिणा—

चन्द्रिका

केरग्न्यादिगतत्वेनानुस्मर्तव्यमित्यनुष्ठानविशेषोपयोगिव्यवस्थापकमुक्तम् । उक्तं चानुक्रमणिकायामपि सर्वसूक्तानां परमात्मदेवताकत्वं "एकैव वा महानात्मा देवता" इति । एतेन यागव्यवस्थाऽपि सिद्धा,

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।

इत्यादिना सर्वयागानां विष्णुदेवताकत्वेऽपि आग्नेयादियागेषु अग्न्यादिगतस्यैव भगवतः अग्न्यादिशब्दैरेवोद्देष्टव्यत्वादिना याग-व्यवस्थोपपत्तेः । अग्नीषोमीयादीनां द्विदेवताकत्वं च अधिष्ठानद्वित्वेन

प्रकाशः

सूर्य आत्मा जगतस्तस्थुषश्च" इत्युक्तेः सूर्यदेवताकत्वमेवोक्तं भाति । तथाऽपि स्थावरजङ्गमात्मकजगदात्मकत्वलिङ्गात् "तद्विभूतयो अन्या देवतास्तदप्येतदृषिणोक्तं—इन्द्रम्मित्रं वरुणमग्निमाहुः" इति तदीयोत्तरवाक्याच्च सूर्यशब्देन परमात्मैवाभिप्रेत इति भावः । 'एतेन' इत्यनेन अत्रोक्तं ऋग्भाष्योक्तं च हेतुद्वयं परामृश्यत इति भावेन तद्व्यनक्ति—अहं हीति । अत्र उत्तमाधिकारिरूपकर्तॄणामध-माधिकारिरूपकर्तॄणामग्न्यादिगतविष्णूद्देशप्रकारः, "गुहाशयायैव न देहमानिने"

न देहाय न तन्मानपराय च कथंचन ।

सदेहमानिहरये प्रणमेत्केवलाय वा ॥

इत्यादिना कर्मनिर्णयोक्तो ध्येयः । आदिपदेन सङ्कल्पादिः । अग्नीषोमीयेति । सर्वयागानां विष्णुदेवताकत्वेऽपीत्यनुकर्षः ।

चन्द्रिका

वा, अधिष्ठितभगवद्रूपद्विर्त्वेन वेति द्रष्टव्यम् ॥

अत्र चाद्यसूत्रे स्वपक्षे श्रुतिरूपस्य साधकस्योक्तिः। द्वितीये समाख्यारूपस्य। अत्रेतिशब्दस्याऽऽद्यसूत्रानुषक्तेन 'विष्णुर्वैश्वानरः' इत्यनेनान्वयः। तथा च 'विष्णुर्वैश्वानरः' इति गीतायां स्मर्यमाणं

प्रकाशः

**आद्येति**। "वैश्वानरः साधारणशब्दविशेषात्" इत्यत्र 'साधारणस्य' श्रुतिलिङ्गयोर्निरवकाशत्वादिना अग्नाविष्णवो. साधारणस्य वैश्वानरशब्दस्य "आत्मानं वैश्वानरं" इत्यात्मशब्देन विशेषणादित्यात्मश्रुतिरूपस्येत्यर्थः। 'द्वितीये' "स्मर्यमाणमनुमानं स्यात्" इत्यत्र। "अहं वैश्वानरो भूत्वा" इति स्मृतिसमाख्यारूपस्य स्वपक्षे साधकस्येत्यर्थः। अत्र परैरितिशब्दो यस्मादित्यर्थे व्यख्यातः। स न युक्तः, करणार्थल्युडन्तानुमानशब्देनैव तदर्थलाभेन इतिशब्दाभावेऽप्यन्वयसम्भवादतिशयाभावाच्च हेत्वर्थकत्वस्य व्यर्थत्वादिति भावेन तस्यार्थमाह—**अत्रेति**। यद्वा—भाष्ये "इतिशब्दः समाख्याप्रदर्शकः" इत्युक्तम्। "अनेन "इति स्मर्यमाणं" इत्यन्वयः सूचितो भवति" इत्युक्तं टीकायाम्। तावता कथमर्थो लब्ध इत्यतः तद्व्यनक्ति—**अत्रेति**। आद्यसूत्रे "तत्तु समन्वयात्" इत्यतोऽनुवृत्तस्य 'तत्' इत्यस्यार्थानुवादः—**विष्णुरिति**। अहंशब्दस्य विष्ण्ववतारभूतकृष्णार्थकत्वात् 'विष्णुर्वैश्वानर इति गीतायां' इत्युक्तम्।

चन्द्रिका

विष्णोर्वैश्वानरत्वं अत्रापि स एव वैश्वानर इत्यस्यानुमापकमिति सूत्राक्षरार्थः । तृतीये वैश्वानरशब्दमात्रविषयासाधारणबाधकोद्धारः । "तथा चेतोऽर्पणनिगदात्" इत्यत्र ब्रह्मणि प्रसिद्धशब्दत्यागेन गायत्र्यादिशब्दप्रयोगे प्रयोजनं नेत्याशङ्का निरस्ता, अत्र त्वग्न्यादिशब्दानां पाचकत्वादिलिङ्गाना च ब्रह्मणि निरवकाशत्वाशङ्का निरस्यत इति भेदः ।

प्रकाशः

**तृतीय इति** । "शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते" इत्यत्राग्न्यादिशब्दात् होमाधारत्वगार्हपत्याद्यङ्गकत्वपाचकत्वादिलिङ्गेभ्यः "योऽयमन्तःपुरुषे" इति अन्तःप्रतिष्ठानान्न विष्णुरिति शङ्किते, अग्न्यादिनामलिङ्गादिमत्त्वेन उपासनोपदेशेन तेषां सावकाशत्वात्, "को न आत्मा किं ब्रह्म" इत्युक्तात्मत्वादेरन्यत्रासम्भवात्, "शीर्ष्णो द्यौस्समवर्तत" इत्यादिना पुरुषसूक्तोक्तपुरुषसदृशस्यैवात्र "मूर्धैव सुतेजाः" इत्यादिनाऽभिधानाद्विष्णुरेवेति निरवकाशेन सावकाशस्य बाधोपपत्तेरित्युक्तत्वादिति भावः । **बाधकेति** । यद्यपि "असम्भवात्" इत्यांशेन साधकोक्तिरप्यस्ति, तथाऽपि तदुक्तेः परपक्षे बाधकोक्त्या बाधकनिरासेऽपि व्यापारात् 'बाधकोद्धारः' इत्युक्तम् । अत एव प्रकरणादित्यनुक्त्वा 'असम्भवात्' इत्युक्तम् । "तथा दृष्ट्युपदेशात्" इत्यंशस्य गायत्र्यधिकरणोक्तेनापौनरुक्त्यमाह—तथा **चेतोऽर्पणेति** ।

चन्द्रिका

चतुर्थे परमतनिरासः। पञ्चमे प्रस्तुते वैश्वानरशब्दसमन्वये समाप्ते सर्वशब्दविषयसाधारणबाधकोद्धाराय लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्य गत्युक्तिः। वाच्यार्थधीव्यवहितं लक्षणादिकं विना साक्षान्मुख्यवृत्त्या ब्रह्मणः शब्दार्थत्वेऽपि व्यवहाराविरोध इति चास्याक्षरार्थः। षष्ठादिषु चतुर्षु साधारणबाधकोद्धाराय वैदिक्याः सूक्तादिव्यवस्थायाः गत्युक्तिः। यद्यप्यनुस्मृत्यनन्तरमभिव्यक्तिरभिव्यक्त्यनन्तरं सम्पत्तिः तथाऽप्यभिव्यक्त्यनन्तरमपि सम्पत्तेः प्राक् अनुस्मृतिरपेक्षितेति दर्शयितुं अनुस्मृतेर्मध्ये उक्तिरिति सूत्रक्रमः। न च "साक्षात्" इत्यादिसूत्रपञ्चकं समन्वयानुपपत्तिसमाधिरूपत्वादध्यायान्ते स्यादिति शङ्क्यं, चतुर्थपादे पदवर्णस्वरादिसमन्वयस्यापि वक्ष्यमाणत्वात्तदवस्थायां च सूक्तादिभावस्यैवाभावेन तदनुपपत्ति-

प्रकाशः

**चतुर्थ इति**। "अत एव न देवता भूतं च" इत्यत्र 'अत एव' निरवकाशात्मशब्दादिहेतोरेव देवतादिर्नेत्यर्थः। साधकोक्तिबाधकोद्धारयोरनन्तरं परमतनिरासस्यावसरप्राप्तेरिति भावः। **पञ्चम इति**। "साक्षादप्यविरोधं जैमिनिः" इत्यत्र। **षष्ठादिष्विति**। "अभिव्यक्तेरित्याश्मरथ्यः" "अनुस्मृतेर्बादरिः" "सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति" "आमनन्ति चैनमस्मिन्" इत्येतेषु। **साधारणेति**। उक्तवक्ष्यमाणसर्वशब्दसाधारणेत्यर्थः। तत्रापि पौर्वापर्यमाक्षिप्य समाधत्ते—**यद्यपीति**। पञ्चमादेरत्रानिवेशमाशङ्क्य त्रेधा समाधिमाह—**न चेति**।

चन्द्रिका

शङ्कानुदयात्, तथाऽग्न्यादिसूक्तादिस्थपदादिसमन्वयनिष्ठानां पुंसामग्न्यादावेव ब्रह्मणोऽभिव्यक्त्याद्देरभावेन परिहारासङ्गतेः, तथोभयत्रप्रसिद्धसमन्वयोक्त्यनन्तरं ब्रह्मणि मुख्यत्वेऽन्यत्र प्रयोगो न स्यात् इत्याशङ्काया अन्यत्र मुख्यत्वे ब्रह्मणि स न स्यादिति प्रतिशङ्काप्रतिरुद्धत्वेनानुदयाच्च अत्रैव युक्तत्वादिति ॥

अन्ये तु—"अयमग्निर्वैश्वानरः" इत्यादिप्रयोगात् जाठरभूताग्नि-

प्रकाशः

**पदादीति** । पदवर्णस्वरादिसमन्वयादिनिष्ठानां चतुर्मुखाद्युत्तमाधिकारित्वेन तेषां व्याप्त्यदर्शित्वादिति भावः । तर्हि तृतीयपादान्ते निवेशः स्यादित्यत आह—**तथोभयत्रेति** ॥

**अन्ये त्विति** । "आत्मानं वैश्वानरमुपास्ते" इत्यत्र वैश्वानरः किं जाठराग्निः भूताग्निर्वा दिव्यदेवता वा जीवात्मा वा परमात्मा वेति संशये, 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे" इति जाठराग्नौ, "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं" इति बाह्ये भूताग्नौ, "वैश्वानरस्य सुमतौ स्याम" इति देवतायां प्रयोगाद्वैश्वानरशब्दस्य त्रितयसाधारण्याज्जाठराग्न्यादिरेव वा, आत्मशब्दस्य जीवे रूढत्वाच्चद्बलाज्जीवो वेति प्राप्ते, "एतस्यात्मनो वैश्वानरस्य द्यौर्मूर्धैव" इत्यादिना द्युमूर्धत्वादिश्रवणात्, "को न आत्मा किं ब्रह्म" इति ब्रह्मशब्दश्रवणात्, तयोश्चान्यत्रायोगात्, वैश्वानरशब्दस्य विश्वश्चासौ नरश्चेति विश्वनरः सर्वात्मकः पुरुष इत्यर्थः । विश्वनर एव वैश्वानर

चन्द्रिका

देवतारूपत्रयसाधारणस्य वैश्वानरशब्दस्य, जीवेश्वरसाधारणस्यात्मशब्दस्य च "मूर्धैव सुतेजाः" इति द्युमूर्धत्वादिना विशेषणादित्याद्यसूत्रार्थ इत्याहुः। तत्र, "सोऽयमात्मा चतुष्पात्, स्थूलभुग्वैश्वानरः" इत्यात्मन्यपि वैश्वानरशब्ददर्शनेन त्रितयसाधारण्योक्त्ययोगात्। जाठराग्नेरपि भूतजातित्वेन पृथगुक्त्ययोगाच्च। भाष्योक्तश्रुत्यादिभिरात्मशब्दस्य ब्रह्मण्येव मुख्यतया जीवसाधारण्याभावाच्च। स्वीकृतं च त्वयाऽपि "द्युभ्वाद्यायतनं इत्यत्रात्मशब्दस्य ब्रह्मासाधारण्यम्। अन्यथा "तमेवैकं जानथ आत्मानं" इत्यात्मशब्दस्य जीवशब्दत्वेन सूत्रे 'अतच्छब्दात्' इति हेतुना जीवनिरासस्य, 'स्वशब्दात्' इत्यनेनोक्तात्मशब्देन ब्रह्मत्वसाधनस्य

प्रकाशः

इति योगवृत्त्या ब्रह्मणि सम्भवात्, आत्मशब्दस्य जीववत् ब्रह्मण्यपि वृत्तेः वैश्वानरो ब्रह्मेति सिद्धान्त इत्याहुः। तत्र सूत्रार्थनिरासेनैतन्निरस्तमिति भावेन तमनूद्य निराह—**अयमिति**। **जाठरेति**। अन्यथा 'अत एव न देवता भूतं जाठरश्च' इति निर्देशः स्यादिति भावः। जीवकोटेरप्यनुत्थानमाह—**भाष्योक्तेति**। "अयमात्मा ब्रह्म"

अनाद्यत्वादनात्मान ऊनत्वाद्गुणराशितः।

इत्यादिभिरित्यर्थः। स्वीकृतत्वमेव व्युत्थितं प्रति विपक्षे बाधकोक्त्याऽऽह—**अन्यथेति**॥

चन्द्रिका

चायोगात् ॥

केचित्तु—जाठरभूताग्निदेवतेश्वररूपचतुष्टयसाधारणस्य वैश्वानरशब्दस्य, मुमुक्षुभिरौपमन्यवप्रभृतिभिर्जिज्ञास्यमानत्वादिभिर्ब्रह्मलिङ्गैर्विशेषणादित्यर्थ इत्याहुः। तन्न, जाठरस्य पृथगुक्त्ययोगस्योक्तत्वात्। "आत्मानं वैश्वानरं" इति साक्षाद्वैश्वानरविशेषणात्मश्रुतिग्रहण-

प्रकाशः

**केचित्त्विति।** वैश्वानरः किं परमात्मेति शक्यनिर्णय उत नेति संशये, जीवपरसाधारणात्मशब्दसत्त्वेऽप्यात्मशब्दस्य "वैश्वानरमात्मानं" इति जीवे अप्रसिद्धवैश्वानरशब्दविशेषितत्वेन जीवविषयत्वशङ्कानुदयात्, जाठरभूतदेवतासु प्रागुक्तरीत्या प्रयोगदर्शनात्, परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" इति प्रयोगदर्शनात्, वैश्वानरशब्दस्य जाठरादिचतुष्टयसाधारण्यादुपक्रमगतब्रह्मात्मशब्दयोर्मिथः प्रतिबद्धत्वेनानिर्धारकत्वात्, अन्नादनरूपफलस्य च सर्वत्रोपपन्नत्वादशक्यनिर्णय इति प्राप्ते, "को न आत्मा किं ब्रह्म" इति सर्वेषां जीवानां आत्मभूतं ब्रह्म किमिति प्रश्नकरणात्, उत्तरे च "आत्मानं वैश्वानरं" इति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्चायं वैश्वानरः परमात्मेति निर्णेतुं शक्यत एव, चतुष्टयसाधारणस्यापि वैश्वानरशब्दस्यास्मिन् प्रकरणे मुमुक्षुभिरौपमन्यवादिभिर्जिज्ञास्यत्वसर्वात्मत्वादिभिर्ब्रह्मधर्मैर्विशेष्यमाणत्वादित्यर्थ इत्याहुरित्यर्थः। **आत्मश्रुतीति।** तस्या ब्रह्मसाधा-

चन्द्रिका

सम्भवे प्राकरणिकलिङ्गरूपविशेषणग्रहणायोगाच्च ॥

यच्चोक्तमन्यैः —

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्र... ... ... ... ... ॥

इत्यादिनेश्वरे स्मर्यमाणं त्रैलोक्यात्मकं रूपं मूलभूतां श्रुतिमनुमापयत्, समानविषयां "मूर्धैव सुतेजाः" इत्यादिवैश्वानरविद्यामनुमापयत्, वैश्वानरस्येश्वरत्वे लिङ्गमिति द्वितीयसूत्रार्थ इति, तन्न, "चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे" इत्यादिश्रुत्यन्तरस्यापि उक्तस्मृतिमूलत्वसम्भवेन

प्रकाशः

रण्योपपादनस्य त्वन्मतेऽपि तुल्यत्वादिति भावः ॥

मतद्वयेऽपि द्वितीयादिसूत्रार्थान् क्रमेणानूद्य निराह—**यच्चोक्तमन्यैरिति । इत्यादिनेति ।**

द्यौर्मूर्धानं यस्य विप्रा वदन्ति खं चैव नाभिश्चन्द्रसूर्यौ च नेत्रे ।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥

इत्यादिरादिपदार्थः । **मूलभूतामिति ।** स्मृतीनां श्रुतिमूलत्वस्य पूर्वतन्त्रे स्मृतिनये व्यवस्थापनात्, तुल्यार्थाया एव मूलत्वादत्र च द्युप्रभृतीनां वैश्वानरस्य मूर्धाद्यवयवत्वेन "मूर्धैव सुतेजाः" इत्यादिना उच्यमानत्वेन तुल्यार्थत्वादेतद्वाक्यमनुमापयति, स्मृतिश्च ब्रह्मविषयेति मूलभूतश्रुतेरपि तथात्वं गमयिष्यतीत्यर्थः । **श्रुत्यन्तरस्यापीति ।** स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति, न तु वैश्वानर-

चन्द्रिका

वैश्वानरविद्यायास्तन्मूलत्वासिद्धेः । "अहं वैश्वानरः" इति साक्षादीश्वरस्य वैश्वानरत्वबोधकस्मृतौ सत्यां वकबन्धप्रयासायोगाच्च ॥

केचित्तु — द्युप्रभृतिपृथिव्यन्तं रूपं श्रुतिस्मृतिष्वीश्वरेऽभिज्ञातमिह प्रत्यभिज्ञायमानं वैश्वानरस्येश्वरत्वेऽनुमानं लिङ्गमित्यर्थ इत्याहुः ।

प्रकाशः

विद्यामेव कल्पयितुं शक्नोति,

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ............. ॥

इत्याथर्वणवाक्यमूलत्वेनापि सम्भवेन कल्पकस्यान्यथासिद्धत्वादित्यर्थः । ननु श्रुतौ "अग्निर्मूर्धा" इति श्रूयते, स्मृतौ च 'द्यौः" इति । तथा च कथं तन्मूलकत्वमिति चेन्न, "असौ वा व लोकोऽग्निर्गौतम" इति श्रुतेरग्नेर्द्युशब्दपर्यायत्वादिति तात्पर्यात् । न केवलं तेन वैश्वानरविद्याया ब्रह्मविषयत्वासिद्धिः, गतिसम्भवे क्लिष्टकल्पनायोगश्चेत्याह — **अहमिति** ॥

**केचित्त्विति** । सूत्रे इति शब्दः प्रकारवचनः, "अनुमानशब्दः "श्रुतिलिङ्गवाक्य" इति श्रुत्यादिसहपठितासाधारणधर्मरूपलिङ्गपरः, स्मर्यमाणशब्दः प्रत्यभिज्ञायमानपरः । तथा च "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" "द्यौर्मूर्धानं यस्य विप्रा वदन्ति" इत्यादिश्रुतिस्मृतिषु 'इति' इत्थंभूतं द्युवादिरूपमीश्वरे अवगतं 'इह' वैश्वानरविद्यायां "मूर्धैव सुतेजाः" इत्यादिना 'स्मर्यमाणं' प्रत्यभिज्ञायमानं लिङ्गं

चन्द्रिका

तन्न, स्मर्यमाणशब्दस्य प्रत्यभिज्ञायमानार्थत्वे स्वारस्यभङ्गात्। "अहं वैश्वानरः" इत्यादिषूक्तस्येह "आत्मानं वैश्वानरं" इति श्रुतिप्रत्यभिज्ञासम्भवे लिङ्गप्रत्यभिज्ञोक्त्ययोगाच्च ॥

यच्चोक्तमन्यैः—"मनो ब्रह्मेत्युपासीत" इत्यादिवज्जाठरे वैश्वानरे ईश्वरदृष्ट्युपदेशो वा, "मनोमयः प्राणशरीरः" इत्यादिवद्वैश्वानरोपाधेरीश्वरस्य द्रष्टव्यत्वेनोपदेशो वा तृतीयसूत्रस्थतथादृष्ट्य-

प्रकाशः

स्यात, श्रुत्यादाववगतं द्युप्रभृत्यात्मकत्वरूपं लक्षणं लिङ्गमिह प्रत्यभिज्ञायत इत्यर्थः। "अनुस्मृतेश्च" इत्यत्र 'अनुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात्' इति श्रुतप्रकाशोक्तेः कथमेवं दूषणमित्यतः— **स्वारस्येत्युक्तम्** । उक्तरीत्या स्वारस्यसम्भवे तस्यागायोगात्। सूत्रकारोक्तिस्तु अनुशब्दबलाद्वा, स्वारस्यासम्भवाद्वा प्रत्यभिज्ञार्थत्वाशयेति युक्तमिति भावः। **अहमिति** । श्रुत्यादाववगतं द्युप्रभृत्यवयवत्वरूपं लिङ्गमिह प्रत्यभिज्ञायत इत्युक्तिवत्, "अहं वैश्वानरो भूत्वा" इति स्मृतौ विष्णाववगतवैश्वानरश्रुतिरिह प्रत्यभिज्ञायत इत्यपि वक्तुं शक्यत्वेन लिङ्गाद्बलवच्छ्रुतिप्रत्यभिज्ञोक्तिरेव ज्यायसीति तस्यागायोगात्। तथा च 'स्मर्यमाणा श्रुतिः" इत्येव सूत्रणं स्यात्, लघु चैवं सति सूत्रं स्यादित्यर्थः। किञ्चानुमानशब्दस्य लिङ्गपरत्वे "स्मर्यमाणं लिङ्गं" इत्येव निर्देशस्स्याल्लाघवादिति ध्येयम्। "शब्दादिभ्यः" इति सूत्रे शङ्काभागार्थस्याविरोधात्सिद्धान्तांशार्थमनूद्य प्रत्याह—**यच्चेति** ।

चन्द्रिका

पदेशशब्दार्थ इति, तत्र न तावदाद्यः, वैश्वानरस्य मनोवत् प्रतीकत्वे मनश्शब्दस्येव वैश्वानरशब्दस्यापि ब्रह्मणि समन्वयोक्त्य योगात् । वैश्वानरज्ञानेन सर्वपाप्मप्रदाहश्रवणायोगाच्च । अत एव न द्वितीयः । न हि सोपाधिकस्योपासनेन ज्ञानेन वा सर्वपाप्मदाहः । यच्चोक्तं—पुरुषविधशब्देन द्युमूर्धत्वादिकमुच्यत इति, तन्न, त्वन्मते 'विशेषात्' इत्यत्रापि द्युमूर्धत्वादेरुक्तत्वेन पुनरुक्तेः । यच्चोक्तं—विनैव जाठराग्नेः प्रतीकोपाधिकल्पनाभ्यां साक्षात्केवलस्य

प्रकाशः

**सर्वपाप्मेति** । "तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते" इत्युक्तब्रह्मज्ञानफलस्य प्रतीकज्ञानादसिद्धेरिति भावः । 'अत एव' इत्याद्युक्तं व्यनक्ति—**न हीति** । **पुरुषविधशब्देनेति** । यद्यपि परभाष्ये 'पुरुषमपि चैनं' इत्यपि सूत्रपाठ उक्तः, तथाऽपि स पाठोऽप्रामाणिक इति भावेनायमेव पाठोऽनूदितः, ये तु 'पुरुषविधमपि' इति पठन्ति, तेषां मते द्युमूर्धत्वादिपृथिवीप्रतिष्ठितत्वान्तं यत्पुरुषविधत्वं, तदुच्यत इत्युक्तेरिति भावः । **विशेषादितीति** । आद्यसूत्रेऽपीत्यर्थः । "अत एव" इति सूत्रार्थो नातीव विरुद्ध इति तदुपेक्ष्य "साक्षादपि" इति सूत्रार्थं निराह—**यच्चोक्तमिति** । पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तं, इदानीं विनैव प्रतीकोपाधिकल्पनाभ्यां केवलस्यैव अग्निवैश्वानरशब्दवाच्यत्वमुच्यत इत्युक्तमित्यर्थः ।

चन्द्रिका

ब्रह्मणः उपासनास्वीकारेऽप्यविरोधः । केवलेऽप्यग्निर्वैश्वानरशब्दाव-प्रणीत्वादिगुणयोगेन वर्तते इति, तन्न, साक्षाच्छब्दस्य कैवल्यार्थ-तायाः क्लिष्टत्वात् । अतीतानामाकाशादिशब्दानामागामिनामक्षरादि-शब्दानामपि यौगिकत्वापत्त्याऽस्माकं मत इव समन्वयाध्यायस्य तत्तच्छब्दप्रवृत्तिगुणपूर्त्यर्थत्वापाताच्च । यच्चोक्तं ब्रह्मपक्षे प्रादेश-मात्रश्रुतिरयुक्तेति शङ्कानिरासार्थं "अभिव्यक्तेः" इत्यादिसूत्राणीति, तन्न, "अर्भकौकस्त्वान्नेति चेत्" इत्यनेन, अत्रापि "तथा दृष्ट्युपदेशात्" इत्यनेन चास्याः परिहृतत्वादिति दिक् ॥

प्रकाशः

**क्लिष्टत्वादिति** । अव्यवधानार्थत्वात्तस्येत्यर्थः । **गुणपूर्तीति** । तथा चैतत्सूत्रं त्वन्मतप्रतिकूलमिति भावः । किञ्च "तथा दृष्ट्युपदे-शात्" इत्यनेनैव शङ्कायाः परिहृतत्वात्, साक्षात्तत्प्रतिपादकत्वोक्ता-वतिशयाभावात्, प्रतिकूलत्वाच्च न वाच्यमेवैतदित्यपि ध्येयम् । **यच्चोक्तमिति** । "यस्त्वेतं प्रादेशमात्रं" इति श्रुतप्रादेशमात्र-श्रुतिः कथमित्याकाङ्क्षायां अतिमात्रस्यापीश्वरस्य प्रादेशमात्रपरिमाण-हृदयादिस्थानेषु उपासकानामभिव्यज्यमानत्वाद्वा, हृदयादावनुस्मर्त-व्यत्वाद्वा "प्रादेशमात्रमिव ह वै देवास्संविदिता अभिसम्पन्नास्स्मः" इति श्रुत्या प्रादेशमात्रत्वसम्पत्त्या वा प्रादेशमात्रत्वं युक्तमित्यर्थः । "हृद्यपेक्षया" इत्यग्रेतनेनापि परिहृतत्वं ध्येयमिति भावेनाह— **इति दिगिति** । यद्वा केषाञ्चिन्मते "शब्दादिभ्यः" इत्यादि-

चन्द्रिका

अत्रापि परपक्षेऽपि वैश्वानरस्य जीवत्वं निषिध्य ब्रह्मेत्युक्तेस्तद्वैदार्थ्यैव ॥

केचित्तु कथमपरिच्छिन्नस्य प्रादेशमात्रत्वमिति शङ्कानिरासकं "अभिव्यक्तेः" इति सूत्रम्। उपासनार्थं प्रादेशमात्रत्वेनाभिव्यक्तेरिति च तस्यार्थः। मूर्धप्रभृत्यवयवैः पुरुषविधत्वोक्तिः किमर्थेति शङ्कानिरासकं "अनुस्मृतेः" इति सूत्रम्। पुरुषविधत्वेनानुस्मृत्यर्थं तदुक्तिरिति च तस्यार्थः। कथमुरःप्रभृतीनां वेद्यादित्वोक्तिरिति

प्रकाशः

सूत्रार्थदूषणं कुतो न कृतमित्यत आह— **इति दिगिति**। तथा हि– तत्सूत्रमग्न्यादिशब्दादिना जाठराग्निवैश्वानरत्वशङ्कानिरासकमित्युक्तमयुक्तं जाठरस्य भूतत्वेन पृथक्शङ्कायोगात्, "अत एव" इति सूत्रे तन्निरासात्। अवश्यवक्तव्यपरसाधकसावकाशत्वोक्त्या बाधकोद्धारपरत्वसम्भवे अन्यथावर्णनायोगाच्च। 'पुरुषमपि' इति पाठस्य असाम्प्रदायिकत्वात्। अग्निशब्दस्य अग्रणयनादिना भगवद्वाचित्वं वक्तुं "साक्षादपि" इति सूत्रमित्यपि न, शब्दमात्रस्य विष्णुवाचित्वे अन्यत्रव्यवहारविरोधरूपबाधकोद्धारत्वसम्भवेऽन्यथोक्त्ययोगादित्यादि ज्ञेयमिति भावः। 'अत्रापि' एतदधिकरणेऽपीत्यर्थः॥

**अपरिच्छिन्नस्येति**। अभिविमानपदोक्तस्येत्यर्थः। 'अभिव्यक्तेः' उपासकाभिव्यक्त्यर्थं तद्बुद्धिस्थतयेति यावत्। द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वरूपं प्रादेशमात्रत्वमित्याश्मरथ्यो मन्यत इत्यर्थः। 'अनुस्मृत्यर्थं' उपासनार्थम्।

चन्द्रिका

शङ्कानिरासकं "सम्पत्तेः" इति सूत्रम् । प्राणाहुतेरग्निहोत्रत्व-सम्पादनाय उरःप्रभृतीनां वेद्यादित्वोक्तिरिति च तस्यार्थ इत्याहुः । तन्न, अभिव्यक्त्यादिसूत्राणां भिन्नविषयत्वादाश्मरथ्यादिपदसूचितविकल्पो न स्यात् । प्रतिसूत्रं साध्याध्याहारश्च स्यात् ॥

प्रकाशः

**विकल्प इति** । अस्मन्मतरीत्या सूक्तव्यवस्थारूपैकार्थ एव नाना-निमित्तोक्त्या "लोपः शाकल्यस्य" इत्यादाविव मुनिग्रहणेन सूचित-विकल्पो युज्यते, नान्यथेत्यर्थः । **साध्येति** । "अभिव्यक्तेः" इत्यत्र प्रादेशमात्रत्वमिति, "अनुस्मृतेः" इत्यत्र पुरुषविधत्वमिति, "सम्पत्तेः" इत्यत्र उरःप्रभृतीनां वेदित्वाद्युपदेश इत्यध्याहार इत्यर्थः । यद्यप्यत्र भाष्यदिशा अभिव्यक्तेर्निमित्तादग्न्यादिसूक्तनियम इत्याश्मरथ्य इत्यर्थप्रतीत्या सिद्धान्तेऽप्यध्याहारः साध्यस्य अविशिष्ट इत्यतः-- **प्रतिसूत्रमित्युक्तम्** । अत एव भाष्ये प्रतिसूत्रमेतदेव साध्यमुक्तम् । तथा चैकत्र अध्याहृतमेव अनुवर्तिष्यते सर्वत्रेति भावः । यद्वा -'अभिव्यक्तेः साक्षादप्यविरोध इत्याश्मरथ्यः' इत्यादिरूपेण प्रतिसूत्रमन्वयः । 'साक्षादपि' अनन्ययोगेन मुख्य-वृत्त्यैव ब्रह्मणः सर्वसूक्तप्रतिपाद्यत्वेऽपि अग्न्यादिसूक्तव्यवस्थाया अविरोध इत्याश्मरथ्यादिर्मन्यते, अभिव्यक्त्यादेः निमित्तादित्येवं रूपेणार्थोपपत्तेः अनुवृत्तस्य पर्यवसितोक्तिर्भाष्ये— **सूक्तनियम इति** । अतोऽस्माकं न क्वाप्यध्याहारस्तव तु प्रतिसूत्रमिति भावः ॥

चन्द्रिका

टीकाक्षरार्थस्तु—**गतिसाधनत्वादरतिः पाद इति** । लोके गमनेनारतिदर्शनात् रतिविरुद्धगतिसाधनत्वात्पादोऽरतिशब्दार्थ इत्यर्थः । **वाक्यान्तरस्याविरोधेनेत्यादि** । भाष्योदाहृतश्रुतौ "सर्वलिङ्गः सर्वगुणः" इत्यादौ श्रुतस्य सर्वशब्दस्य दुःखित्वादिजीवलिङ्गं नार्थः, निरवद्यत्वादिविरुद्धत्वादित्यर्थः । **अपिपदेनोभयसमुच्चयसिद्धेरित्यादि** । सूत्रे

प्रकाशः

यत्तु उक्तरीत्या वैश्वानरशब्दस्य जाठरादिषु चतुर्षु साधारणस्य शिवासाधारणब्रह्मात्मादिशब्दैर्विशेषणाच्छिव एव वैश्वानर इति, तदप्येतेनैव निरस्तं, जाठरस्य पार्थक्यायोगादेरुक्तत्वात् । ब्रह्मात्मादिशब्दस्य विष्णवेकनिष्ठताया भाष्यादौ बहुधा प्रतिपादनात् । "अहं वैश्वानरः" इति स्मृतिविरोधात् । पुरुषसूक्तविरोधाच्च, पुरुषसूक्तवैष्णवतायाश्च भाष्ये स्पष्टत्वात् । सूत्रार्थनिरासप्रकारस्तु केषाञ्चिन्मत इव ध्येयः अनतिभिन्नार्थत्वात् सूत्राणामिति ॥

"शब्दादिभ्यः" इति सूत्रे "मूर्धानं दिवोऽरतिं पृथिव्याः" इत्यस्यामृचि गतिसाधनत्वादरतिः पादः पृथिव्याः कारणमिति व्याख्यातम् । तद्व्यनक्ति **गतीति** । अरतिशब्देन गतिरुच्यते । पादस्य तत्साधनत्वात्, कार्यगमनेन तत्साधनं पादो लक्ष्यते । अरतिशब्दार्थो गतिः कथमित्यतोऽवयवार्थेनेत्याह—**लोक इति** । नञो विरुद्धार्थत्वात् रतिविरुद्धा अरतिरिति गतिरेवोच्यत इति । तत्त्वप्रदीपे तु न रतिर्येनेति सोऽरतिः पादः इत्यर्थ इत्युक्तं "सम्पत्तेः" इति सूत्रव्याख्यायाम् । "अत्र व्यवहारस्योपचरितत्वाङ्गीकारे

चन्द्रिका

'पुरुषविधं' इत्यनेनैवोच्यमानायाः श्रुतिसमाख्यायाः द्वितीयसूत्रोक्तस्मृतिसमाख्यया, असम्भवशब्दोक्तप्रकरणेन च समुच्चयस्यापिशब्देनैव सिद्धेश्चशब्दः शङ्कानिवृत्त्यर्थः सन् भाष्योक्तस्यैव सूचक इत्यर्थः । **प्रागुक्तैवानुपपत्तिरिति** । वैदिकस्याग्न्यादिसूक्तादिव्यवहारस्याग्न्यादिप्रतिपादकत्वनिमित्तकत्वेन मुख्यत्वाङ्गीकारे "सर्वनामा" इत्यादिश्रुतिविरोधादिरूपप्रागुक्तानुपपत्तिरेव व्यवहारस्याभिव्यक्त्यादिनिमित्तकत्वनोपचरितत्वाङ्गीकारे हेतुरित्यर्थः । भाष्योदाहृतश्रुतौ 'अरं' इत्यस्य सम्यगित्यर्थ इति तत्त्वप्रदीप एवोक्तमिति ॥

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण श्रीव्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ तात्पर्यचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥

प्रकाशः

प्रागुक्तैवानुपपत्तिः" इत्येतद्दुर्गमार्थत्वाद्व्यनक्ति—**वैदिकस्येति** । "विश्वं हरिमारादरमुपास्ते" इति श्रुतौ 'अरं' इत्यस्यार्थाप्रतीतेराह—**भाष्येति** । एवेति टीकाकारानुक्तेर्निमित्तमेतदिति सूचितम् । शिष्टमुपन्यासमुखेन विशदीकृतमिति भावः । पेटिकासङ्गतिस्तु प्रागेवोक्तेति ॥

॥ इति वैश्वानराधिकरणम् ॥

इति श्रीमत्सर्वतन्त्रस्वतन्त्र श्रीसुधीन्द्रगुरुपादशिष्य श्रीराघवेन्द्रयतिकृते चन्द्रिकाप्रकाशे प्रथमाध्यायस्य द्वितीयः पादः ।

**श्रीमध्वान्तर्गत श्रीवेदव्यासार्पणमस्तु ।**



# एतत्संपुटग्रन्थोदाहृतवचनाकरप्रदर्शिनी



—o—

# शुद्धाशुद्धपत्रिका



| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 5 | प्र 8 | समाध | समाधत्ते |
| 6 | प्र-7 | अन्यथः | अन्यथा |
| 6 | प्र-15 | भोगा | भोगः |
| 9 | | सूत्र 22 | सूत्र 23 |
| 9 | चं-2 | इत्यु | इत्या |
| 9 | प्र-5 | विद्वासो | विद्वांसो |
| 11 | प्र- 3 | पास | प्राप्ते |
| 12 | चं 5 | प्रत्यन्यय | प्रत्यन्वय |
| 20 | चं 5 | मातरिश्वश्रत्या | मातरिश्वश्रुत्या |

मुद्रणे पूर्वापरीकारस्य विद्यमानत्वेन प्रथमतः षड्विंशतिसङ्ख्याक (२६) पत्रमभ्यस्यानन्तरं सप्तविंशतिसङ्ख्याक (२७) पत्रमध्येयम् ।

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 31 | प्र-11 | मानान्रसंवादेन | मानान्तरसंवादेन |
| 38 | चं-6 | माधिकरण | मधिकरण |
| 43 | चं-10 | नु० ख्यानं | नुव्याख्यानं |
| 45 | प्र-1 | ज्ज्योतिश्श्रुत्या | ज्योतिश्श्रुत्या |
| 45 | प्र-13 | ज्योतिश्रते | ज्योतिश्श्रुते |
| 53 | प्र-6 | श्चग्निसूक्त | श्चाग्निसूक्त |
| 58 | चं-1 | पूर्पक्षो | पूर्वपक्षो |
| 58 | प्र-9 | आनन्दमयधिकरण | आनन्दमयाधिकरणा |
| 62 | प्र-13 | व्यतस्था | व्यवस्था |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 63 | प्र-1 | वैश्वानरादिकरणे | वैश्वानराधिकरणे |
| 63 | प्र-8 | न्यायनेत्यर्थः | न्यायेनेत्यर्थः |
| 64 | चं-2 | बाधाया | बाधाय |
| 67 | चं 10 | धभ्वाधधिकरणे | द्युभ्वाद्यधिकरणे |
| 67 | प्र 1 | लिङ्गस्योति | लिङ्गस्येति |
| 71 | प्र-7 | प्रागुक्तनूध | प्रागुक्तमनूद्य |
| 84 | मू-9 | एकदश | एकदेश |
| 84 | त-1 | षड्विधा | षड् ?धा |
| 86 | त 8 | भूभुवः | भूर्भुवः |
| 86 | त-14 | भवः | भावः |
| 86 | त 14 | एव | एवं |
| 88 | च-9 | भष्ये | भाष्ये |
| 88 | च-9 | ज्य ति | ज्योति |
| 89 | च-1 | ज्यतिषः | ज्योतिषः |
| 90 | च-5 | विवेष्णुपि | विष्णुत्वेऽपि |
| 91 | च-1 | अधऽपि | आद्येऽपि |
| 91 | प्र 9 | तदुपजीत्वादिति | तदुपजीवित्वादिति |
| 92 | प्र-10 | व व | वा व |
| 93 | प्र-8 | पूर्वपक्षपक्षे | पूर्वपक्षे |
| 99 | प्र-12 | भावै | भावे |
| 100 | प्र-7 | स्पष्टयित्पते | स्पष्टयिष्यते |
| 101 | च-1 | ज्यायाश्च | ज्यायाँश्च |
| 101 | च-3 | एतमेव | एतामेव |
| 103 | प्र-1 | साङ्ख्याधि | साङ्ख्याधि |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 104 | प्र-2 | वच्यं | वाच्यं |
| 104 | प्र-10 | सध वा | स द्यावा |
| 105 | च-7 | कर्योन्निय | कार्योन्नियः |
| 107 | प्र-6 | अनादरेपि | अनादेरपि |
| 110 | च 3 | बाधकोद्वार | बाधकोद्धार |
| 111 | प्र-7 | गुहानिहितत्वत्यु | गुहानिहितत्वयु |
| 113 | प्र-4 | वैयथ्र्मेव | वैयर्थ्यमेव |
| 114 | च-4 | पादत्वोक्ते | पादत्वोक्ति |
| 114 | च-5 | गायत्र्यख्य | गायत्र्याख्य |
| 114 | च-9 | भ्युक्तम् | भ्युक्तम् |
| 115 | च-2 | मंन्त्र | मन्त्र |
| 115 | प्र-11 | तद्धरि | तद्धृदि |
| 115 | प्र-12 | नमको | नामको |
| 116 | च-4 | न चत्र पद | न चात्र पाद |
| 116 | च-5 | सम्माार्ष्टि | सम्मार्ष्टि |
| 117 | च 3 | पशुा | पशुना |
| 118 | च-2 | पोर्णमास्या | पौर्णमास्या |
| 118 | प्र-3 | वगमद्व क्य | वगमाद्वाक्य |
| 119 | प्र-17 | ब्रह्मणवाक्येत | ब्राह्मणवाक्येन |
| 120 | च-8 | विवासायां | विवक्षायां |
| 122 | प्र-2 | राकशे | राकाशे |
| 122 | प्र-7 | प्रसादस्य | प्रासादस्य |
| 122 | प्र-11 | धवयविशिष्ट | द्यवयवविशिष्ट |
| 123 | प्र-10 | द्भवति | द्भवति |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 124 | प्र-3 | वग्रूपगायत्र्यत्मकत्वं | वाग्रूपगायत्र्यात्मकत्वं |
| 124 | प्र-5 | वक्त्वस्य | वाक्त्वस्य |
| 124 | प्र-6 | प्रतिष्ठत्वं | प्रतिष्ठात्वं |
| 124 | प्र-7 | प्रतिष्ठात्वदनति | प्रतिष्ठात्वतदनति |
| 125 | च-1 | लाका | लोका |
| 125 | च-1 | भाष्योक्त | भाष्योक्त |
| 125 | च-3 | तान्तन्तरिक्ष | तान्तरिक्ष |
| 125 | प्र-6 | दर्यित | दयितं |
| 126 | च-3 | सवोच्चो | सर्वोच्चो |
| 127 | च-5 | परत्वम् | परत्वम् |
| 128 | च-6 | आस्ति | अस्ति |
| 128 | प्र-4 | प्रदेशास्थित | प्रदेशस्थित |
| 130 | च-5 | सप्तत्यन्तो | सप्तम्यन्तो |
| 131 | प्र-4 | अवस्थति | अवस्थिति |
| 132 | च-8 | सूचयतिति | सूचयतीति |
| 137 | त-3 | इत्यशायः | इत्याशयः |
| 139 | त-14 | वगिन्द्रि | वागिन्द्रि |
| 140 | मू 6 | सा | स |
| 140 | त-1 | श्यकज | श्याकज |
| 140 | त-8 | विदार्यैतय | विदार्यैतया |
| 150 | च-4 | लिङ्गाना | लिङ्गानां |
| 150 | प्र-14 | प्रपाकं | प्रापकं |
| 153 | प्र-1 | इत्यदा | इत्यादा |
| 153 | प्र-5 | ाठ | पाठ |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 155 | च-5 | लभ त इस्यर्थः | लभत इत्यर्थः |
| 155 | प्र-10 | प्राणदि | प्राणादि |
| 157 | च-5 | तदाभावादेव | तद्भावादेव |
| 159 | प्र-1 | भट्टादि | भाट्टादि |
| 164 | च-3 | चेदना | चोदना |
| 164 | प्र-11 | प्र म ण्य | प्रामाण्य |
| 165 | च-1 | पशून्प्रेति | पशूनाप्नोति |
| 165 | प्र-10 | विध | विधे |
| 166 | प्र-3 | वर्तपानापापदेशेन | वर्तमानापदेशेन |
| 166 | प्र-9 | भेदाधि | भेदादधि |
| 168 | च-7 | पूर्वपक्ष | पूर्वपक्षः |
| 171 | प्र-11 | स्मभिः | स्माभिः |
| 175 | प्र-11 | अस्मत्यस्य | अस्मीत्यस्य |
| 179 | प्र-2 | भागवतो | भगवतो |
| 182 | प्र-9 | तदुद्धार | तदुद्धार |
| 183 | प्र-2 | तावस्तां | तावास्तां |
| 184 | प्र-13 | आक्षिप्य | आक्षिप्य |
| 185 | प्र-3 | लिङ्गानुरोधनेन्द्र | लिङ्गानुरोधेनेन्द्र |
| 186 | प्र-7 | धुपपप्लवतः | धुपप्लववतः |
| 186 | प्र-9 | नाषीति | नापीति |
| 187 | प्र-5 | इत्यदि | इत्यादि |
| 187 | प्र 10 | कथा | कथं |
| 188 | च-3 | इत्यादिब्रह्मात् | इत्यादिब्रह्मलिङ्गात् |
| 188 | प्र-3 | वधादिमिः | वधादिभिः |

| पत्रम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 188 | प्र-4 | लिङ्गानुरोघना | लिङ्गानुरोधेन |
| 188 | प्र-9 | विशेषेणत्व | विशेषणत्व |
| 188 | प्र-16 | परमत्म | परमात्म |
| 188 | प्र-16 | इत्युपंदेश | इत्युपदेश |
| 189 | च-4 | सम्वभात् | सम्भवात् |
| 189 | प्र-8 | पूर्वपक्षाते | पूर्वपक्षान्ते |
| 197 | प्र-1 | त्यनाह | त्याह |
| 197 | प्र-10 | कर्थ | कथं |
| 213 | त-16 | शंसर्तति | शंसतीति |
| 214 | त-9 | ब्रह्मदस्य | ब्रह्मशब्दस्य |
| 216 | त-1 | सामन्य | सामान्य |
| 216 | त-3 | मित्थोति | मिथ्येति |
| 218 | मू-1 | भोग | भोग |
| 218 | त-3 | दोषित्वन्न | दोषित्वान्न |
| 218 | त-14 | अ न्द | आनन्द |
| 225 | प्र-6 | शब्ब | शब्द |
| 226 | प्र-8 | मत्यक्षिपति | मत्याक्षिपति |
| 228 | प्र-5 | पृथिव्याद्यविदित्व | पृथिव्याद्यविदितत्व |
| 229 | च-1 | अभकौ | अर्भकौ |
| 229 | प्र-12 | गुहसु | गुहासु |
| 229 | प्र-16 | हर्दति | हृदीति |
| 231 | प्र-7 | अन्तक्षं | अन्तरिक्षं |
| 231 | प्र-14 | श्र | श्रु |
| 232 | च 6 | प्रतीत्य | प्रतीत्या |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 234 | प्र-2 | मुख्यत्वक्ते | मुख्यत्वोक्ते |
| 234 | प्र-12 | त्रिताद्य | त्रिपाद्य |
| 235 | प्र-1 | द्युरित्यर्थः | द्युक्तिरित्यर्थः |
| 245 | प्र-66 | त्वादेगौ | त्वादेगौं |
| 247 | प्र-10 | उक्ताभि | उक्ताभिप्रा |
| 252 | प्र-1 | तिन् | तिष्ठन् |
| 260 | च-5 | बलवात्व | बलवत्वा |
| 261 | प्र-8 | त्तज्जीव | तत्तज्जीव |
| 265 | च-1 | उपसंहारस्यत्वाद्ध | उपसंहारस्थत्वाद्ध |
| 271 | च-1 | तत्रात्या | तत्राप्या |
| 271 | च-2 | किषय | विषय |
| 277 | च-2 | बह्मो | ब्रह्मणो |
| 278 | प्र-18 | कर्तॄ | कर्तृं |
| 280 | प्र-1 | सप्तनि | सप्तमी |
| 283 | च-1 | प्रकर | प्रकार |
| 284 | प्र-2 | इहाश्रम्रानात् | इहाऽऽम्नानात् |
| 289 | प्र-20 | कौकत्व | कौकस्त्व |
| 291 | प्र-7 | गुणतश्चपि | गुणतश्चापि |
| 292 | च-7 | कर्मि | कर्मी |
| 293 | त-11 | सूत्रदिति | सूत्रमद्रिति |
| 293 | त-12 | श्रति | श्रुति |
| 295 | मू-1 | निखिलवस्यैक | निखिलस्यैक |
| 295 | त-7 | आद्विति | अद्विति |
| 297 | च-2 | इत्मुक्त | इत्युक्त |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 300 | च–6 | इत्यप्रयो | इत्यप्रयोगात् |
| 301 | च–3 | रूपादित्व | रूपादितित्व |
| 302 | च–6 | आदिति | अदिति |
| 303 | प्र–1 | तेः श्रप्रसिद्धार्थत्वे | श्रुतेः प्रसिद्धार्थत्वे |
| 307 | प्र–16 | याय | न्याय |
| 311 | प्र–11 | ख्यन | ख्यान |
| 314 | प्र–1 | ओदेनेति | ओदनेति |
| 315 | च–4 | मुख्यार्थः | मुख्यार्थ |
| 316 | प्र–9 | पुरा ो | पुराणो |
| 317 | च–6 | पीजना | योजना |
| 318 | प्र–11 | तदुपलक्षतिमि | तदुपलक्षणमिति |
| 319 | च–10 | चस्ति | चास्ति |
| 321 | त–7 | न्यायत्वत् | न्याय्यत्वात् |
| 324 | त–8 | भव्यत्वात् | भाव्यत्वात् |
| 325 | त–7 | लाक्षणिकत्वाभ्यपगात् | लाक्षणिकत्वाभ्युपगमात् |
| 326 | मू–1 | प्रविष्टात्मानौ | प्रविष्टावात्मानौ |
| 328 | प्र–18 | जवित्व | जीवत्व |
| 329 | प्र–9 | बाधबाधकं | बाधकं |
| 329 | प्र–12 | मुख्यत्वयोगेन | मुख्यत्वायोगेन |
| ,, | प्र–14 | भोक्तृत्वयोगे | भोक्तृत्वयोगेन |
| 330 | प्र–7 | विशेषाविशेषाविति | विशेषाविति |
| 331 | च–1 | भोक्तत्वं | भोक्तृत्वं |
| 331 | प्र–6 | पशूद्रव्यक | पशुद्रव्य |
| 332 | च–3 | विज्ञामय | विज्ञानमयक |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 333 | प्र–9 | तयोर्हेनैकत्व | तयोर्हनैकत्व |
| ,, | प्र–10 | द्वित्वप्रपकत्वेन | द्वित्वप्रापकत्वेन |
| 336 | प्र–1 | ब्रह्मवचर्स | ब्रह्मवर्चस |
| 336 | प्र–7 | समिधदादीनां | समिधादीनां |
| 339 | त–10 | सिद्ध वु | सिद्धावु |
| 342 | प्र–7 | श्रवणामिति | श्रवणमिति |
| 347 | प्र–15 | गुणात्वान्न | गुणत्वान्न |
| ,, | प्र–16 | सङ्ख्यावशेन | सङ्ख्यावशेन |
| 348 | प्र–3 | अस्वित्यत | अस्त्वित्यत |
| 349 | प्र–15 | नित्येर्कमणि | नित्ये कर्मणि |
| ,, | प्र–17 | आख्यातोपात | आख्यातोपात्त |
| 351 | प्र–2 | इत्याच शङ्कवैषम्येण | इत्याशङ्क्य वैषम्येण |
| 352 | प्र–1 | सूचित परि | सूचितपरि |
| 354 | च–4 | गुहाप्रवेशदिना | गुहाप्रवेशादिना |
| 356 | च–4 | आनान्दो | आनन्दो |
| 359 | प्र–1 | उमाभ्यां | उभाभ्यां |
| 362 | प्र–10 | सङ्ग्रह | सङ्ग्रहादपि |
| 364 | च–1 | आत्मनः | आत्मानः |
| ,, | च–6 | व्यप्ता | व्याप्ता |
| 365 | प्र–3 | पौनकक्वयं | पौनरुक्त्यं |
| ,, | प्र–10 | अभराणामह्लादका | अमराणामाह्लादका |
| 367 | च–3 | गवान्तरेण | गवन्तरेण |
| 370 | च–2 | धी | धीः |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 370 | च–8 | दुबलत्वेन | दुर्बलत्वेन |
| 371 | च–2 | अबधार्थं | अबाधार्थं |
| 371 | च–8 | श्र्वेतनत्व | श्वेतनत्व |
| 372 | प्र–10 | प्रातिपादिक | प्रातिपदिक |
| 372 | प्र–11 | अरोपित | आरोपित |
| 374 | च-6 | विशेपणात् | विशेषणात् |
| 375 | प्र-6 | मृत्यर्यस्यो | मृत्युर्यस्यो |
| 375 | प्र–9 | चराचराचर | चराचर |
| 376 | प्र–15 | भोक्तृतोक्तिर्द्वयो | भोक्तृतोक्तिद्वयो |
| 377 | च–1 | उपजीवकभावेन | उपजीव्योपजीवकभावेन |
| ,, | च–3 | विषभूतं | विषयभूतं |
| ,, | प्र–2 | चार्थवणिकैक | चाथर्वणिकैक |
| ,, | प्र–5 | ब्रह्म | ब्रह्मता |
| 378 | प्र–6 | प्रत्यभिज्ञ | प्रत्यभिज्ञा |
| 379 | प्र–8 | त्यवाय | व्यवाया |
| ,, | प्र–10 | पुरस्तदु | पुरस्तादु |
| ,, | प्र–10 | समिधेन्य | सामिधेन्य |
| 380 | च–8 | एतच्छस्त्र | एतच्छास्त्र |
| ,, | प्र–1 | सामिधेनीां | सामिधेनीनां |
| 381 | च–1 | सिद्धत्वो | सिद्धत्वेन |
| 387 | प्र–7 | आदनीयत्व | अदनीयत्व |
| 389 | च–3 | पतृत्व | पातृत्व |
| 392 | त–6 | प्रीयते | प्रतीयते |
| 393 | त–9 | क्ष्यादित्यस्थो | अक्ष्यादित्यस्थो |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 393 | त-12 | शेपोक्त | श्लेषोक्तेः |
| 394 | त-11 | चब्दवृत्ति | शब्दवृत्ति |
| 395 | त-1 | रभ्यासर्थाद | रभ्यासार्थवाद |
| 396 | मू-1 | भमनः | भामनः |
| 405 | प्र-13 | अवधारणस्य क्षिस्थस्य | अवधारणस्याक्षिस्थस्य |
| ,, | प्र-14 | अणि | अग्नि |
| 406 | प्र-7 | दाम्यासै | दाभ्यासैः |
| 40ऽ | प्र-8 | अक्ष्णोरसङ्गत्व | अक्ष्णो असङ्गत्व |
| 410 | च-4 | कृष्णा | कृष्णं |
| ,, | प्र-3 | देवतन्तस्थोऽपि | देवतान्तस्स्थोऽपि |
| 410 | प्र-19 | विद्य | विद्या |
| 419 | च-1 | अग्निपरोऽग्निपरोऽपि | अग्निपरोऽपि |
| 420 | च | व क्य | वाक्य |
| 421 | प्र-11 | सुध क्त | सुधोक्त |
| 426 | प्र-11 | इत्युव | इत्युक्त्वा |
| 432 | च-4 | विभापा | विभाषा |
| 444 | त-11 | यत्व | यस्य |
| 447 | त-5 | सकाशद्भे | सकाशाद्भे |
| 455 | च-5 | अत्यत्र | अत्रत्य |
| 469 | च-1 | शति | इति |
| 470 | प्र-7 | प्रतिनियतियमनात् | प्रतिनियतनियमनात् |
| 488 | त-1 | वीरञ्चस्य | विरञ्चस्य |
| 492 | प्र-7 | परः परः | परतः परः |
| 498 | प्र-14 | अन्तनयन्यायेन | अन्तर्नयन्या येन |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 499 | प्र–9 | निवकाशत्व | निरवकाशत्व |
| 500 | प्र–1 | श्रीतत्वापक्षया | श्रीतत्वापेक्षया |
| 503 | प्र–2 | दिवृण्वन् | विवृण्वन् |
| 504 | च–8 | स्मृतिर्ब्रह्मणः | स्मृतिभिर्ब्रह्मणः |
| 509 | प्र–5 | भेदव्यदेशान्न | भेदव्यपदेशान्न |
| 511 | प्र–15 | अङ्गिङ्गिभाव | अङ्गाङ्गिभाव |
| 514 | प्र–10 | पतिस्तु | पतितस्तु |
| 516 | प्र–8 | विषशेणान्न | विशेषणान्न |
| 518 | प्र–8 | विषत्वादिना | विषयत्वादिना |
| 519 | च–3 | पञ्चयुक्त क्षरं | पञ्चम्युक्ताक्षरं |
| 526 | त–1 | द्यपि | यद्यपि |
| 532 | त–1 | अग्न्यदौ | अग्न्यादौ |
| 537 | च | गतधि | गताधि |
| 539 | प्र–6 | धनुरेधेन | ह्यनुरोधेन |
| ,, | प्र–7 | प्रापक्ये | प्रापकयो |
| 544 | प्र–4 | तथा चा | तथा च |
| 546 | च–1 | शब्दातां | शब्दानां |
| 547 | च–1 | पुरुप | पुरुष |
| 558 | प्र–2 | सात्धारणस्य | साधारणस्य |
| ,, | प्र–6 | व्यख्यातः | व्याख्यातः |
| 572 | प्र–6 | निमित्तकत्वनो | निमित्तकत्वेनो |

